[१]अभीलुनीलीकमथापि कुष्ठं
व्यंगं [२]सपिप्लुं तिलकांश्च जन्तोः ।
शाम्यंति सद्यो वदनप्रलेपात्
दृष्टिश्च वक्त्रश्च भवेत्प्रसन्नम् ॥१००॥

मुखे प्रलिप्ते हसतोऽश्नतो वा
श्लेष्मा सवायुः स्वपतः [३]प्रकोपः ।
यात्याशु तस्माच्छिरसो विरेकाः
स्नेहाश्च धूमाश्च पुनः प्रयोज्याः ॥१०१॥

अग्निप्रतापाद्वि[४]द्रुतश्च जंतो-
र्धत्ते च शुष्के वदनप्रलेपे ।
अभीलुपूर्व्वान्प्रवदन्ति रोगां-
स्तेषां यथोक्तां विदधीत शान्तिम् ॥१०२॥

नक्तान्धतैमिर्यशिरोर्त्तिदाहं
पित्तात्मिकां चक्षुरुजां सदाहाम् ।
दोषास्तथान्येपि मुखत्वचस्थाः
शाम्यन्ति सद्यो वदनप्रलेपात् ॥१०३॥

अक्ष्णोर्व्विकारे कफमारुताभ्यां
नस्तः कृते पीनसरोगिणां च ।
हनुग्रहे शीर्षरुजासु चैव
वदन्ति वर्ज्यान्वदनप्रलेपान् ॥१०४॥

अंगुलस्य चतुर्भागो मुखलेपो विधीयते ।
मध्यमस्तु त्रिभागः स्यादन्त्य [स्त्वेकांगुलो] भवेत् १०५

---

१ अभीलु may be same as अभीरु रलयोरभेदात् ।
२ 'सपिल्पं' इति युक्तः पाठः । ३ प्रकोपम् इति अन्ये ।
४ विद्रुते इति पठितव्यम् ।

यष्टयाह्वरोध्रां त्रिफला मृणालं
सितोपलां कांचनगैरिकञ्च ।
पत्रत्वगेलागुरुदेवदारु
पुनर्नवा व्याघ्रनखांजनञ्च ॥१०६॥
मनःशिलालं बृहती त्वचञ्च
मांसी हरे[णु] [परि] पेलवं च ।
सौवीरकं गैरिककट्फलञ्च
स्याच्छारिवा शर्करया विमिश्रा ॥१०७॥
इत्यर्धरूपैश्चतुरः प्रदिष्टाः
कफास्रपि[त्त] । ि [नल] रोगशान्त्यै ।
विडालकैस्तैर्नयनं समन्ता-
दापक्ष्मूलात्प्रदिहेद्बहिर्वा ॥१०८॥
रोध्रञ्च किंचित्तु घृतेन दिग्ध-
मयो विघृष्टामभयामथो वा ।
त्वचं बृहत्याः सममञ्जन [ञ्च]
[विडा]लकः सर्वरुजापहः स्यात् ॥१०९॥

गैरिकरसांजनांजनमनःशिलरीतिकुसुमसमभागाः ।
ईषन्मरिचसहो याद्विगुणं ै. . . . . . . . . . ॥११०॥
मरिचकुसुमे च हरितं विपचेन्मृद्वग्निना घृतसहीयम् (सहितम् )।
अंजनविडालकोयश्चतुर्व्व वक्ष्यामः . . . . . . . . ॥१११॥

. . . . . . . . . . . . . . . . . . . . . . . .गाक्त्तखलय ।
. . . . . . . . . . . . . . . . प्रोच्यमानं निबोधत ॥११२॥

रसदोषाद्व्यवायाच्च पित्तशोणितदूषणात् ।
भवत्यकालपलितं वृद्धस्य जरसा भवेत् ॥११३॥

प्रायेण श्लेष्मला न[१]र्यरुछाया शल्य . . . . ।
. . . . निषेविण्यो रजो दुष्टं सृजन्ति च ॥११४॥
प्रसन्नरक्तपित्तोष्मा केशभूमिरतः स्त्रियाः ।
न च्यवंति ततः केशास्तस्मादखिलताः(खलिताः)स्त्रियः।११५
पुंसामतो विपर्यासे रक्तपित्तं प्रदुष्य[ति]।
[च्यावयन्] केशमूलानि खालितं कुरुते शिरः ॥ ११६ ॥
निष्केशं ताम्रवालश्च खालित्यं यच्चिरोत्थितम् ।
न तत्सिद्ध्यति साध्यन्तु नवं सम्यगुपाचरेत् ॥ ११७ ॥
खालित्यपलिते पूर्व्वं बहुशो वेधयेत्सिराः ।
दुष्टशोणितशुद्धस्य वमनादिक्रिक्र(क्रि)या हिता ॥ ११८ ॥
यथो ' ' ' ' पश्चाच्छुद्धकोष्ठः प्रयोजयेत् ।
तैलयोगांश्च विविधान्केशरागांस्तथैव च ॥ ११९ ॥
केशसंजननांश्चैव तथा संवर्द्धनानि च ।
प्रक्षालनाश्च केशानां यथादोषहरा हिताः ॥ १२० ॥
स्वाद्वम्ब्ल(म्ल)लवणोपेतैर्घृतैर्मारुतकासिनम् ।
सान्नैरुपाचरेद्धीमान्केवलैर्व्वा यथाबलम् ॥ १२१ ॥
ग्राम्यानूपोदकरसैः सगुडैः सपलाण्डुभिः ।
अम्ब्ल(म्ल)स्निग्धोष्णमधुरैर्भोज्या गोधूमशालयः ॥ १२२ ॥
सुरां समण्डां घर्माम्बु रसान्वापि प्रकामतः ।
वातकासे बहुस्नेहं सगुडं वा पयः पिबेत् ॥ १२३ ॥
शृंगवेरषडो(शटी)द्राक्षा श्रं(शृं)गीपिप्पलिभार्ग्गिभिः ।
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ १२४ ॥
पिप्पलीमारुताजाजी षडी(शटी)पुष्कराचित्रकैः ।
ससैन्धवमिदं चूर्णं हितं मारुतकासिनाम् ॥ १२५ ॥

---

१ यथोचिताशनम् युक्तं विद्यते विषयसम्बन्धित्वात् ।

पलानि क्काथयेत् त्रिंशत्कण्टकार्या जलाढके ।
चतुर्भागस्थिते पूते दद्याद्गुडपलान्यगे ॥ १२६ ॥
चूर्णैर्न्नागरभार्ग्येलापिप्पलिषडि(शटि)चित्रकैः ।
घृततैलपलैश्चापि संयुतं लेहवत्पचेत् ॥ १२७ ॥
चतुर्भिराघनीभावाच्छीते च द्विपलं मधु ।
पिप्पलीपलचूर्णं च दत्त्वा लिह्यात्तु कासनुत् ॥ १२८ ॥
दशमूलकषायेण भार्ग्गीकल्कं घृतं पचेत् ।
[दक्षतित्तिरिनिर्यूहे तत् परं] वातकासनुत् ॥ १२९ ॥
कण्टकार्या रसप्रस्थे घृतस्य कुडवं पचेत् ।
पुनर्न्नवायाः कल्केन तत्परं वातकासनुत् ॥ १३० ॥
भार्ग्गीकल्कं घृतं चाथ पचेद्दध्नि चतुर्गुणे ।
वाघी(व्याघ्री)रसद्विगुणितं वातकासहरं परम् ॥ १३१ ॥
पैत्तिके सर्प्पिषः पानं हितं स्यात्सविरेचनम् ॥ १३२॥



# [द्वितीयं प्रकरणम्]

[न] मस्तथागतेभ्यः–

प्राक्प्रणीतैर्महर्षीणां योगमुख्यैस्समन्वितम् ।
वक्ष्येहं सिद्धसंकर्ष्यं नाम्ना वै नावनीतकम् ॥१॥

नानाव्याधिपरीतानां नृणां स्त्रीणाञ्च यद्धितम् ।
कुमाराणां हितं यच्च तत्सर्व्वमिह वक्ष्यते ॥२॥

समासरतबुद्धीनां भिषजां प्रीतिवर्द्धनम् ।
योगबाहुल्यतश्चापि विस्तरज्ञं मनोनुगम् ॥३॥

अध्यायं चूर्णयोगानां प्रथमं चात्र वक्ष्यते ।
द्वितीयं घृतपानानां तृतीयं तैलसंज्ञितम् ॥४॥

चतुर्थं मिश्रकं नाम नानाव्याधिचिकित्सितम् ।
पञ्चमं वस्तियोगानां रसायनविधानतः ॥५॥

सप्तमं च यवागूनां वृष्यमष्टममुच्यते ।
नेत्राञ्जनानां नवमं दशमं केशरञ्जनम् ॥६॥

अभयाकल्पनामाख्यमत्रैकादशमुच्यते ।
द्वादशं स्याच्छैलजतोश्वित्रकस्य त्रयोदशम् ॥७॥

कुमारभृत्यमप्यत्र स्याच्चतु[र्दश]मिष्यते ।
बंध्याचिकित्सिताख्यं च ज्ञेयं पञ्चदशं बुधैः ॥८॥

सुभगाचिकित्सिताख्यश्च तथा षोडशकं मतम् ।
इत्येते षोडशाध्याया विज्ञेया नावनीतकम्(के) ॥९॥

नेदं दद्यादपुत्राय न चाप्रात्रे कथञ्चन ।
अशिष्ये प्रस्तवो न स्यात्कर्त्तव्य इति मे मतिः ॥१०॥

## [ प्रथमोध्यायः ]

तालीसपत्रं मरिचं नागरं पिप्पली तथा ।
यथोत्तरं भागवृद्धास्त्वगेले चार्द्धभागिके ॥११॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं भक्तारोचनम् (भक्तरोचनम्)॥१२॥
हृत्पाण्डुग्रहणीशोषकासप्लीहज्वरापहम् ।
छर्द्यतीसारगुल्मघ्नं मूढवातानुलोमनम् ॥१३॥

* इति तालीसकं नाम चूर्णम् *

यवानीं तिन्तिडीकं च नागरं सांब्ल(म्ल)वेतसम् ।
दाडिमं वदरश्चाम्ब्ल(म्लं) कार्षिकान्युपकल्पयेत् ॥१४॥
धान्यसौवर्चलाजाजी वरांगं चार्द्धकार्षिकाः ।
पिप्प[ल]ी [ना]ं शतं त्वेकं द्वे शते मरिचस्य च ॥१५॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥१६॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥१७॥

* इति षाडवं नाम चूर्णम् *

[.....] [मृद्वी] का पिप्पली विश्वभेषजम् ।
मातुलुंगरसक्षौद्र(क्षौद्रे) लीढः (लीढं) श्वासनिबर्हणम् ॥१८॥
लाजा पाट...नश्चांजनं[1] पिप्पलीकणा ।
शिरीषपुष्पस्वरसैः [यु]क्तः श्वासहरः परः ॥१६॥

---

१ अञ्जनं रसाञ्जनमिति ।

मधुकं मरिचं भार्ग्गी मृद्वीका पुष्करागुरु ।
मधुसर्पिर्युतो लेहो हिक्काश्वासनिवारणः ॥२०॥
शिखिनाडं(लं) रुरोः शृंगमृष्यस्कन्ध[1] घृताप्लुतं।
दग्धमन्तःपुटे श्वासी लिह्यात्तन्मधुसर्पिषा ॥२१॥
प्रवाड(ल)शंखात्रिफलाचूर्णं मधुघृताप्लुतम् ।
पिप्पली गैरिकश्चैव लेह्यं हिक्कानिवारणम् ॥२२॥
शणबीजं प्रवाडां(लां)श्च गैरिकश्चैव लेहयेत् ।
हिक्कायां मधुसर्पिभ्यां खरोष्ट्राश्वास्थिभस्म च ॥२३॥
पिवेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
हिक्काश्वासनिवृत्त्यर्थं स्निग्धः संशोधनं पिबेदिति ॥२४॥
[सितोपलां] तुगाक्षीरीं पिप्पलीं बहुलां त्वचम् ।
अंत्यादूर्ध्वं द्विगुणितं लेहयेन्मधु सर्पिषा ॥२५॥
चूर्णितान्प्राशयेद्वातश्वासकासकफानुदः ।
पार्श्वशूलिनमल्पाग्निं सुप्तजिह्वमरोचकम् ॥२६॥
षडी(शटी)पुष्करजीवन्तीचोरकागुरुनागरैः ।
पिप्पलीमुस्तसुरसत्वगेलोदीच्यभार्गिकैः ॥२७॥
तामलक्यास्तु चूर्णन्तच्छर्करात्ष्टगुणा भवेत् ।
श्वासकासज्वरहरं पार्श्वहृच्छूलनाशनम् ॥२८॥

* इति षड्या(शट्या)दिकं नाम चूर्णम् *

हिंगुं त्रिकटुकं पाठां हवुषामभयां षडीम् (शटीम्) ।
अजमोदाजगन्धे च तिन्तिडीकांब्ल(म्ल)वेतसम् ॥२९॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥३०॥

---

१ ऋष्यस्कंधं इति पठितव्यम् ।

चूर्णमेतत्प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं भक्तेनोष्णोदकेन वा ॥३१॥
पार्श्वहृद्बस्तिशूलेषु गल्मे वातकफोल्बणे ।
ग्रहण्यर्शोविकारेषु प्लीहे पाण्ड्वामयेऽरुचौ ॥३२॥
आनाहे मूत्रकृच्छ्रे च योनिगुदरुजासु च ।
उरोविबन्धे कासे च हिक्काश्वासे गलग्रहे ॥३३॥
भावितं मातुलुंगस्य चूर्णमेतद्रसेन वा ।
बहुशो गुडिकाः कार्याः कार्षिकास्स्युस्ततोधिकम् ॥३४॥

* इति मातुलुंगगुडिका नाम *

कुटुत्रिकं तिक्तकरोहिणीं यवं
चि(कि)राततिक्तोथ शतक्रतोर्यवाः ।
समाः स्युरेते द्विगुणं तु चित्रकात्
द्विरष्टभागं कुटजत्वचं तथा ॥३५॥
सुसूक्ष्मपिण्डं शिशिरांबुसंयुतं
पिबेन्मनुष्योर्द्धपलं गुडान्वितम् ।
ज्वरं प्रमेहं श्वयथूनरोचकं
ह्यसद्रजोगुल्ममथापि पाण्डुताम् ॥३६॥
अन्येपि ये पित्तकफानुबन्धा
रोगा नराणां सुभृशातुराणाम् ।
सर्व्वाञ्जयेच्चूर्णमिदं प्रयुक्तम्
आत्रेयजुष्टं लगुडाख्यमग्र्यम् ॥३७।

* इति लगुडचूर्णं नाम *

त्रिफलायास्त्रयो भागा भागास्त्रिकटुकात्रयः ।
चित्रमुस्ताविडंग[ा]नां भागाः स्युर्नव चायसात् ॥ ३८ ॥

न[वा]यसमिदं चूर्णं पाण्डुश्वयथुरोगनुत् ॥ ३९ ॥

* [इति नवायसं नाम चूर्णम् ] *

रास्नां ससौवर्च्चलभद्रमुस्ता-
मगारधूमं कटुकत्रिकं च ।
क्षारो यवानां षडि(शटि) चेत्समांशा
भागाः समाश्चूर्णकृता विधेयाः ॥ ४० ॥

* इति [कण्ठ] रोग प्रशमनः *

रसाञ्जनं दारुहरिद्रकात्त्वचन्तथा भवेत्तेजवती सपिप्पली ।
समानि कुर्य्यात्तुलितानि बुद्धिमाञ्जलेन पिष्ट्वा गुडिका निधापयेत्।४१
शमेति रक्तं मुखपाकमेव च गलग्रहं कण्ठविडालकां तथा ॥४२॥

* इति मुखरोगघ्नी गुडिका *

त्रिफलायास्तु कुडवं पिप्पल्याः कुडवं तथा ।
विडंगमरिचाभ्याञ्च कुडवे द्वे समावपेत् ॥ ४३ ॥
पलं पलं च कुर्वीत दंतीचित्रकयोरपि ।
ग्रंथिकात्पिप्पलीमूलात्पलं कुष्ठपलन्तथा ॥४४॥
शृंगवेरपले द्वे च [त्रीणि च]व्यफलानि च ।
पेष्यान्यर्धपलीनानि (पलिकानि) यानि तानि निबोधत ॥४५
रास्नां बलां गोक्षुरकं मधुकं देवदारु च ।
वचां प्रतिविषां पाठां मुस्तां कटुकरोहिणीम् ॥४६॥
कट्फलं शारिवे द्वे च श्यामा भल्लातकानि च ।
पुनर्नवां तेजवतीं त्वचं पत्रं शतावरीम् ॥४७॥
निचुलं त्रिवृतां भार्ग्गीं कुटजस्य फलं त्वचम् ।
एतदौषधसंभारं सूक्ष्मचूर्णं तु कारयेत् ॥४८॥
यावदेतद्भवेच्चूर्णं द्विस्तावत्स्यादयोरजः ।
तदेकत्र कृतं युक्त्या लेहयेत मधुद्रवम ॥४९॥

क्षीरं चानुपिबेद्युक्त्या निरन्नक्षीरसेविता ।
अयोरजीयमित्येतत्ख्यातं सिद्धं रसायनम् ॥५०॥
संवत्सरप्रयोगेन(ण) शतं वर्षाणि जीवति ।
मासद्वयेन मनुजो जीवेत शरदां शतम् ॥५१॥
निहन्याच्छ्यथुं चोग्रं वृक्षमिन्द्राशनिर्यथा ।
पाण्डुरोगमथार्शांसि मन्दमग्निं क्रिमीनपि ॥५२॥
भगन्दलां(भगन्दरं) कामलां च कुष्ठाणि जठराणि च ।
प्लिहं(प्लीहं) गुल्मानपस्मारं शूलानि परिकर्त्तिकाम् ॥५३॥
यस्मिन्यस्मिन्विकारे तु युज्यतेऽयमयोरजी ।
तांस्तान्निहन्ति वै सद्यो देवारीन्कुलिशो यथा ॥५४॥
अनुप्रयोगो लाजानां सक्तवो मधुसंयुताः ।
[क्षी]रानुप[ा]नालेहाः स्युः सप्ताष्टौ दिवसानि तु ॥५५॥

* इति अयोरजीयन्नाम चूर्णम् *

मुस्तैला चन्दनोश[ी]र यवानी व्योषवत्सकौ ।
फलं त्रिकटुका दारु दार्व्वीत्वक्पप्पटत्वचः ॥५६॥
पटोलनिम्बषड्ग्रन्थामूर्व्वाभूनिम्बशिग्रुकाः ।
चूर्णास्त्रायन्तिसौराष्ट्रसूक्ष्माप्रतिविषाः समाः ॥५७॥
तिक्तको नामहृद्गुल्मशूलहा सान्निपातनुत् ॥५८॥

* इति तिक्तकं नाम चूर्णम् *

पिप्पल्यतिविषा हिंगु नागरेन्द्रयवा वचा ।
पाठाजमोदा कटुका वृषसौवर्च्चलाभयाः ॥५९॥
वृषद्वादशकं चूर्णमजीर्णानाहशूलनुत् ॥६०॥

* इति वृषद्वादशकं नाम चूर्णम् *

मागध्या कुडवः स्यान्मरिचादपि च कुडवस्तथा ।
देयः(यो) नागरपलानि षट् स्युः पञ्च च तालीसपत्रस्य ॥६१॥

सूक्ष्मैलायाः कर्षौ गुडस्य दद्याद्भिषक्तथार्द्धतुलाम् ।
एतच्चूर्णं कृत्वा गुडिकाः पलं संमिताः कुर्यात् ॥६२॥
कासं श्लेष्मो[द्रे]कं भक्तस्यारोचकं विषममग्निम् ।
शमयत्यजीर्णमेव च गुडिका सिद्धार्थिका नाम ॥६३॥

* इति सिद्धार्थिका गुडिका *

सूक्ष्मैलात्वचनागपुष्पमरिचं स्यात्पिप्पली नागरम् ।
एला भागविवर्द्धितैः समधृतैश्चूर्णैः समा शर्करा ॥६४॥
एतच्चूर्णमजीर्णगुल्मजठरेष्वर्शस्सु हृद्रोगिणाम् ।
हिक्काश्वासिषु पार्श्वशूलिषु हितं कण्ठे विकाराश्च ये ॥६५॥

* इति वर्द्धमानकं नाम चूर्णम् *

सूक्ष्मैला सुरसं हिंगु तिन्तिडीकाम्लवेतसे ।
एलां तामलकीं जीवां षडीं पुष्करमेव च ॥६६॥
भिषक्पुष्करमूलश्च कासश्वासिषु योजयेत् ।
हिक्कासु पार्श्वशूलेषु वाते च कफसंवृते ॥६६॥क

* इति सूक्ष्मैलावर्द्धमानकं ॥ श्लो (?) *

सौवर्च्चलाम्ब्लवेतसपिप्पल्यो नागरं वचां हिङ्गुम् ।
हृज्जठरशूलनाशनमौषधमुष्णाम्बुना पेयम् ॥६७॥

* इति सौवर्च्चलाद्यं चूर्णम् *

कुटजयवापिप्पलीनां द्वे कर्षे मधुरसाय(ाः) सार्द्धपलम् ।
पाठापलश्च दद्यात् द्वे च पले शृंगवेरस्य ॥ ६७ ॥
सौवर्च्चलस्य कर्षं कर्षं क्षारस्य यावशूकस्य ।
. . स्तथार्द्धकर्षं तच्चूर्णं कारयेत्सूक्ष्मम् ॥ ६८ ॥
अस्य तु माज्जर्रपदं पिबेन्नरः सर्प्पिषा यवाग्वा वा ।
मद्य वा शीलयता मद्येनालोड्य पातव्यम् ॥ ६९ ॥

एतान्निहंत्यजीर्णं प्ली[हं] मेहश्च पाण्डुरोगश्च ।
सभगन्दराशाँसि च पीत्वारिष्टं प्रयोगेन(ण) ॥ ७० ॥

* इति चूर्णारिष्टं नाम *

हिंगुभागो भवेदेको वचाया द्विगुणो भवेत् ।
विडं त्रिगुणितन्दद्याच्छृ(शृं)गवेरं चतुर्गुणम् ॥ ७१ ॥
यवानिका पञ्चगुणा षड्गुणा चाभया भवेत् ।
चित्रकः सप्तगुणितः सूक्ष्मचूर्णानि कारयेत् ॥ ७२ ॥
एतच्चूर्णं कृतं सूक्ष्मं पाययीत प्रसन्नया ।
मद्येन वा तथान्येन दद्यादुष्णोदकेन वा ॥ ७३ ॥
गुल्मघ्नं दीपनीयञ्च अर्शोघ्नं शूलनाशनम् ।
कासश्वासहरञ्चैव चूर्णमानाहनाशनम् ॥ ७४ ॥
आत्रेयविहितं मुख्यं नाम्ना शार्दूलमुच्यते ।

* इति शार्दूलं[1] चूर्णं श्लो (४) *

सौवर्च्चलस्य च पलं द्विगुणं चाम्ब्लवेतसम् ।
चतुर्गुणमजाजीनां मरिचञ्चाष्टमं भवेत् ॥ ७५ ॥
मातुलुंगरसेनैतद्गुडिकां कारयेद्भिषक् ॥ ७६ ॥
प्रशान्तमग्निञ्जनयेद्वातशूलञ्च नाशयेत् ।

* इति आश्विनीमातुलुंगगुडिका *

स्यान्मातुलुंगस्य रसं सशुक्तं त्रीण्यूषणान्यम्बिलवेतसञ्च ।
विडं यवानीं लवणोत्तमाख्यं सौवर्च्चलं स्याद्गुडिकाथकार्याः ७८
अर्शांसि ताः संशमयन्ति पीताः
शूलानि हन्युर्हृदि पार्श्वयोश्च ।

---

१ शार्दूलं नाम चित्रकस्य, चित्रकः आरम्भे यस्य तत् चित्रकचूर्णम् ।

आनाहयोगानपि चातिसार-
मरोचकं बातकृतं च गुल्मम् ॥ ७९ ॥
* इति आम्लिकामातुलुंगगुडिका *

स्याच्चित्रकं त्रिकटुकं सहपुष्करेण
हिङ्ग्वम्लवेतसयुतां सविडाश्वगन्धाम् ।
कुस्तुम्बुरूणि वचया सह दाडिमञ्च
सौवर्चलं यवमयं तु नवञ्च क्षारम् ॥ ८० ॥
दद्यात्तुलाधृतसमांशनवां यवानीम्
कृष्णाजगन्धपिशुनामरजामजाजीम् ।
तद्भास्करांशुपरिशुष्कसमाहितांशं
चूर्णं भिषक्समरसं तनु योजयीत ॥ ८१ ॥
तद्बीजपूरकरसैर्बिचितं प्रपिष्य
कुर्याद्विमृद्य गुडिका वदरप्रमाणाः ।
एकामरिष्टमधुमाधवशार्करेण (शर्करेण)
काल्यं(कल्यं) पिवेत सुरया दधिमस्तुना वा ॥८२॥
कासं श्वासं पाण्डुरोगाश्चिरस्थं
प्लीहंश्चोग्रं शूलमानाहमुग्रम् ।
हिक्कां हृद्रोगं जाड्यतां ष्ठीवनत्व-
मामातिसारञ्च सशूलगुल्मम् ॥८३॥
विषूचिकामलसकमग्निमार्द्दवम्
प्रवाहिकां गुदपरितापमर्शसाम् ।
शमेन्ति(शमयन्ति) ता विधिवदिहोत्तमं तमः
प्रयोजिता ह्यपि खलु घर्मवारिणा ॥८४॥
* इति आश्विनीमातुलुंगगुडिका ॥ श्लो (५) *

पाठाकलिंगयवमुस्तकरोहिणीनां
भागाः सहातिविषया धरणानि कुर्यात् ।
कुर्याच्चतुर्थधरणेन समां हरिद्रां
मूत्रेण गोः सह पिवेदथचूर्णमेतत् ॥८५॥

कुष्ठाणि षट्त्रिं[शतिका]ि [न] निहन्ति देहे
स्थानानि नाशयति सप्तमहाक्षयस्य ।
गुल्मांश्चा नाशयति मासकृतः प्रयोगः
सर्व्वाग्निकस्य घृतमांसपरस्य जंतोः ॥८६॥

* इति गुल्मचूर्णमश्विनम् *

पिप्पली सविडक्षारास्तथैव च सुवर्च्चिका ।
शृंगवेरं समरिचं सैन्धवं लवणं तथा ॥८७॥

यवानीमथ दन्तीञ्च तृ(त्रि)वृता वत्सकं तथा ।
सौवर्च्चलमजाजीं च त्रिफलाञ्चात्र दापयेत् ॥८८॥

समभागानि सर्व्वाणि सूक्ष्मचूर्णानि कारयेत् ।
चूर्णयोगो भवेच्छ्रेष्ठो गोमूत्रेण सुभावितः ॥८९॥

एतात्स्निग्धशरीरस्य स्निग्धाहारस्य देहिनः ।
विडालपदमात्रं तु दद्यादुष्णेन वारिणा ॥९०॥

परिजीर्णे ततस्तस्मिन्यदा तु तृषितो भवेत् ।
घृतगन्धामवक्षारीन्दाडिमस्य रसेन वै (?)॥९१॥

पाययीत भिषक्श्रेष्ठस्तदा संपद्यते सुखी ॥९२॥
तस्यां तु परिजीर्णायामाहारार्थी यदा भवेत् ।

तदा लोहितशालिनां सुस्विन्नं मृदु चोदनम् ।
भोजयेज्जांगलरसैर्व्यक्ताम्ब्ललवणीकृतैः ॥९३॥

विषूचिकायां अर्शस्सु विकारा विविधाश्च ये ।
दुर्भुक्ते चाप्यजीर्णे च तथा पाण्ड्वामयेषु च ॥९४॥
वातगुल्मेषु च तथा ग्रहणीदोषिणाश्च ये ।
एतद्योगं प्रयुञ्जानः सुखमाप्नोति मानवः ॥९५॥

* इति मागधं चूर्णम् *

उभे हरिद्रे मरिचं पद्मं कुष्ठं सपिप्पली ।
कर्प्पासमूलं मांसी च स्वर्ज्याः क्षारमथाष्टमम् ॥९६॥
एतानि समभागानि दृषदायां प्रपी(पे)षयेत् ।
कोलास्थिमात्रां गु[डिकां] [छाय]ायां परिशोषयेत् ॥९७॥
ततस्तु गुडिकामेकां दद्यादुष्णेन वारिणा ।
[.......य] ते रोगजातानि ताञ्छृणु ॥९८॥
अजीर्णकमुदावर्त्तं मूत्रकृच्छ्रं गलग्रहम् ।
आनाहं वातगुल्मश्च यच्च लूताविषं भवेत् ॥९९॥
सर्व्वं दूषीविषं हत[न्ति] [तथा] [वृ ]श्चकदष्टकम् ।
मूढवातमपस्मारं शाण्ढ्यं (षाण्ड्यं) शाण्ढ्यपुमांश्च यः ॥१००॥
भूतग्रहमथोन्मादं मूढगर्भाश्च या(ः) स्त्रियः ।
दंष्ट्रामूलविषार्थ(र्ते)षु पानमालेपनं तथा ॥१०१॥

* इति हरिद्राचूर्णमाश्विनं श्लो (८) *

षडी वचा तामलकी पिप्पली विश्वभेषजम् ।
गुडं घृतेन भर्ज्जित्वा कारयेद्गुडिकां भिषक् ॥ १०२ ॥
उरोघातं प्रतिश्यायं पार्श्वहृत्कुक्षिवेदनाम् ।
शुष्ककासञ्च बलवत्सर्व्वमेतेन साधयेत् ॥ १०३ ॥

* इति गुडिका गौडिका श्लो (२) *

द्वे मरिचशते कार्ये मागध्यापिप्पलीशतञ्चैकम् ।
पलमपि च शर्करायाः स्यान्नागरकस्तथा मुख्यः ॥१०४॥

स्यात्तिन्तिडीककर्षो दाडिमकर्षः शुचिर्व्वदरकर्षः ।
देयो वरांगकर्षस्तथार्द्धकर्षस्त्वजाजीनाम् ॥ १०५ ॥
अम्लातकस्य कर्षः कर्षार्द्धन्धान्यकस्य विचितस्य ।
सौवर्च्चलकर्षयुतश्चूर्णारिष्टः परमसिद्धः ॥ १०६ ॥
एष समूलानर्शाञ्छमयद्ग्रहणीञ्च दीपयति शान्ताम् ।
हृद्रोगपाण्डुरोगे(गौ) निहन्ति कासं सहश्वासम् ॥१०७॥

* इति चूर्णारिष्टः *

## ❀ नावनीतके चूर्णयोगास्समाप्ताः ❀

* इति प्रथमोऽध्यायस्समाप्तः *



## [द्वितीयोऽध्यायः]

इदममृतरसप्रकख्यं रसायनं बलविवर्द्धनं नृणाम् ।
अमृतप्राशं नाम्ना सर्प्पिरुदारं प्रवक्ष्यामि ॥ १ ॥
आमलकरसप्रस्थः क्षीरविदार्यास्तथा भवेत्प्रस्थः ।
प्रस्थश्चेक्षुरसस्य हि गृष्टिक्षीरस्य तद्वच्च ॥ २ ॥
प्रस्थं प्रस्थं सुघृतं घृतस्य दद्याच्च शारदस्यात्र ।
औषध्यश्च सुपिष्टा इमा प्रदेयाः प्रमाणेन ॥ ३ ॥
ऋषभकमृद्धिं मधुकं विदारिगन्धां तथा पयस्याञ्च ।
सहदेवां सानन्तां मधूलिकां (X) विश्वदेवाञ्च ॥ ४ ॥
द्वे मेदे्ष्यप्रोक्तां शतावरीं मुद्गमाषपर्ण्यौ च ।
श्रावण्यथात्मगुप्तां वीराञ्च पलार्द्धिकान्भागान् ॥ ५ ॥
मृद्वीकां क(ख)र्जूरं वदराण्यपि कुडवसंमितां कुर्यात् ।
अक्षोडतिन्दुकानां निकोचकानाञ्च [भा]गा[र्धं]म् ॥६॥
एतत्सिद्धं ज्ञात्वा परिपूतं स्थापयेच्छुभे भाण्ड(डे) ।
शीतीभूते दद्यान्मधुनः प्रस्थं सुपूतस्य ॥ ७ ॥
षोडशपलानि दद्याद्व्र(घृ)तानि सितशर्कराचूर्णस्य ।
मरिचार्धपलन्दद्यात्पलञ्च सूक्ष्मैल[ाया] देयम् ॥ ८ ॥
सूक्ष्मैरेतैश्चूर्णैरवचूर्ण्य खजेन मन्थयेत्प्राज्ञः ।
तस्य तु मात्रां मतिमानग्निबलं प्रेक्ष्य युंजीत ॥ ९ ॥
जीर्णे च जाङ्गलरसैर्भिषजा शाल्योदनं प्रदातव्यम् ।
अमृतप्राश्यं मुख्यं बलवर्णविवर्द्धनं पुंसाम् ॥ १० ॥
क्षीणक्षते प्रयोज्यं वृद्धेष्वथ कर्शितेषु बालेषु ।
ताम्यत्सु तथा श्वसतां प्रयोज्यमेतच्च हिक्कायाम् ॥ ११ ॥
अमृतं नाम विख्यातं सर्पिरात्रेयनिर्मितम् ॥११॥ क ॥

* इति अमृतप्राशं नाम घृतम् श्लो (?) *

प्रियङ्गुं तगरं कुष्ठं दाडिमं सैलवालुकम् ॥ १२ ॥
तालीसमेदा त्रिफलां केसरं बृहतीद्वयम् ।
नीलोत्पलं देवदारुं चन्दनं द्वे च शारिवे ॥ १३ ॥
द्वे हरिद्रे विड़ंगा च सुमना[नः]कुसुमानि च ।
दन्तीमंशुमतीञ्चैव मांजिष्ठा सा(शा)लपर्ण्यपि ॥१४॥
अक्षमात्रैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे ।
एतत्कल्याणकन्नाम पानीये सर्पिषां वरम् ॥१५॥
कासं श्वासं प्रतिश्यायं तृतीयकचतुर्थकौ ।
उन्मादक्षतवैसर्प्पं प्रमेहान्वातशोणितम् ॥१६॥
हिक्कां छर्दिं पाण्डुरोगं श्वयथून् मूत्रनिग्रहम् ।
रेतोदोषाश्च ये पुंसां योनी(नि)दोषांश्च योषिताम् ॥१७॥
बन्ध्या च लभते गर्भं गरानपि च शातयेत् ।
चूर्णयोगाधिकारेषु विषसन्दूषितेषु च ॥१८॥
प्लीहेष्वर्शस्सु गुल्मेषु घृतमेतद्यथाऽमृतम् ।
बलवर्णकरञ्चैव दीपनीयं प्रचारकम् ॥१९॥
अलक्ष्मीमपि निर्हन्यात्तिष्ठत्येतद्घृतं गृहे ॥१९॥क

* इति घृतं कल्याणंक नाम श्लो (८) *

जीवकर्षभकौ वीरा काकनासा मृणाल्यपि ॥२०॥
मुद्गपर्णीं माषपर्णीमृद्धिं मेदाश्च संहरेत् ।
महासहां क्षुद्रसहां तथा काकोडि(ल)मेव च ॥२१॥
अभीरुपर्णीं हंसपदीं षडीम् [कच्छु] फलानि च ।
फलं खर्जूरमृद्वीकामाम्रमामलकानि च ॥२२॥
पिप्पलीं शृंगवेरञ्च तथैव गुडशर्कराम् ।
एतेषां गर्भमादद्यात्क्षीरञ्च सह सर्पिषा ॥२३॥

[ तत्तु सिद्धं च पूतं च ] पिवेद्व्याधिविनाशनम् ।
एतद्वातश्च पितश्च क्षतकासं च नाशयेत् ॥२४॥
महाकल्याणकं सर्प्पिर्वहुरोगविनाशनम् ।
सिद्धमात्रेयनिर्द्दिष्टमगस्त्याय महात्मने ॥२५॥

* इति महाकल्याणकं घृतं श्लो (५) पा *

निम्वं पटोलं दार्व्वीन्दुरालभां तिक्तरोहिणीन्त्रिफलाम् ।
कुर्याद्दर्धपलांशां पर्पटकं त्रायमाणां च ॥२६॥
सलिलाढकसिद्धानां रसेष्टभागावशेषिते दद्यात् ।
चन्दनकिराततिक्तकपिप्पल्यस्त्रायमाणाश्च ॥२७॥
मुस्तावत्सकवीजं कल्कीकृत्वार्द्धकार्षिकान्भागान् ।
नवसार्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥२८॥
कुष्ठज्वरगुल्मार्शोग्रहणपिाण्ड्वामयश्वयथुहन्तृ ।
वैसर्प्पकिटिभ[पा]माकण्डुपदगण्डनुत्तिसद्धम् ॥२९॥

* इति तिक्तकं घृतम् श्लो (४) *

सप्तच्छदं प्रतिविषां शम्याकं[1] तिक्तरोहिणीम्[2] पाठा[3] ।
मुस्तोशीरं त्रिफलां पटोल(लं) पिचुमुन्दपर्पटकौ ॥३०॥
धन्वयवाषकचन्दनमुपकुल्यां पद्मकं द्विरजनीश्च ।
षड्ग्रन्थासविशालां शतावरीं शारिवे चोभे ॥३१॥
वत्सकवीजं वाशां मूर्व्वाममृतां किराततिक्तश्च ।
कल्कं कुर्यान्मातिमान्यष्टिह्वाम त्रायमाणाश्च ॥३२॥
कल्कस्य चतुर्भागजलमष्टगुणं रसो(ऽ)मृतफलानाम् ।
द्विगुणो घृतात्प्रदेयस्तत्सर्पिः पाययेत्सिद्धम् ॥३३॥

---

१. शम्पाकमिति विशुद्धं प्रतीयते ?

२. ३. रोहिणीं पाठाम् इति युक्तम् ?

कुष्ठानि वातपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वैसर्परक्तपित्तं वातासृक्पाण्डुरोगश्च ॥३४॥
विस्फोटकान्सपामामुन्मादं कामलां क्रिमिं कण्डूम् ।
हृद्रोगगण्डपिडकान् सद्रजो गण्डमालां च ॥३५॥
हन्यादेतत्सद्यः पीतंकाले यथाबलं सर्पिः ।
योगशतैरप्यजित(तान्) महाधि(वि)कारान्महासर्पिः ॥३६॥

* इति महातिक्तकं घृतम् श्लोक ? *

उभे हरिद्रे मञ्जिष्ठा पाठा कटुकरोहिणी ।
चित्रकोऽथ विडंगा च पिप्पली त्रिवृता वचा ॥३७॥
शारिवा कुष्टमुस्तेला मधुकं चाक्षसंमिताः ।
दापयेच्छंखपुष्पीश्च गव्यप्रस्थेषु पञ्चसु ॥३८॥
सिद्धमेतद्घृतं पीत्वा बलवान्स्यादनामयः ।
प्रसन्नवर्णो मेधावी द्युतिमान्स्त्रीषु चाक्षयः ॥३९॥
ऐतेन वाग्विशुद्धयति ब्रह्माधीतं न नश्यति च भूयः ।
स्वरवर्णायोश्च जननं गर्भं चाधत्ति(त्ते) बन्ध्यानाम् ॥४०॥

* इति पंचगवं(व्यं) [ घृतम् ] *

विडंगाचित्रकादंती व्योषव(वा)रिणपि[प्प]ल[ी] ।
अश्वमूत्री त्रिवृत्क्षीर नालिका सैन्धवं वचाम् ॥४१॥
घृतप्रस्थं पचेदेभिर्दध्ना तु द्विगुणीकृतम् ।
तं [त्स]द्धं पाययेद्युक्त्या श्वासार्शोगुल्मनाशनम् ॥४२॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥४३॥
क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥४४॥

* इति षट्पलं नाम घृतम् श्लो (४) *

त्र्यूषणं त्रिफला मुस्ताविडंगाचव्यचित्रकैः ।
कल्कैरेतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥४५॥

* इति त्र्यूषणं [घृतम्] *

वृशं[षं] सशाखं संकुट्य पचेदष्टगुणे जले ।
शिष्टेष्टभागे तस्यैव पुष्पं कल्कं च दापयेत् ॥४६॥
तेन सिद्धं घृतं क्षौद्रसंयुक्तं पित्तगुल्मनुत् ।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम् ॥४७॥

* इति वाशा(सा)घृतम् श्लो (?) *

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठां यवानिकाम् ॥४८॥
चांगेरीस्वरसे सर्पिरेतैः कल्कैर्विपाचयेत् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥४९॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति ॥५०॥

* इति चांगेरीघृतम् श्लो (?) *

चतुर्गुणं रसं कृत्वा चाङ्गेर्याः सुपरिस्रुतम् ।
तस्यैव कल्केनालोड्य बिल्वमात्रेण बुद्धिमान् ॥५१॥
घृतप्रस्थं [पचे]देतच्छनैर्मृद्वाग्निना भिषक् ।
अर्शोव्याधिर्भवेद्यस्य पीत्वैव स सुखी भवेत् ॥५२॥

* इति चांगेरीघृतमपरम् श्लो (?) *

निदिग्धिकायाः स्वरसं ग्राहयेद्यन्त्रपीडितम् ।
चतुर्गुणे रसे तस्मिन्घृतप्रस्थं विपाचयेत् ॥५३॥

गर्भं दद्यात्त्रिकटुकं रास्नां गोक्षुरकं बलाम् ।
पंच कासानिदं सर्पिः पीतं सद्यो व्यपोहति ॥५४॥
* इति कण्टकारिकाघृतं नाम श्लो (?) *
मधुकस्य पलान्यष्टौ द्राक्षायाः प्रस्थमेव च ।
सारसे तु जलद्रोणे शनैर्मृद्वग्निना पचेत् ॥५५॥
अष्टभागावशेषे तु घृतप्रस्थं विपाचयेत् ।
तस्मिन्सिद्धे च पूते च शीतीभूते च दापयेत् ॥ ५६॥
शर्कराया: पलान्यष्टौ प्रस्थार्द्धं माक्षिकस्य च ।
एतच्छोणितपित्ती(त्ति)नां कासिनामल्परेतसाम् ॥ ५७ ॥
[क्षीणा]नां च क्षतानां च प्रयोज्यं समसक्तुकम् ॥ ५७ क ॥
* इति मृद्वीकाघृतम श्लो (?) पा *
पंचमूलमथो ह्रस्वं गुलूचं मधुकं बलाम् ॥ ५८ ॥
पलिकानि जलद्रोणे चतुर्भागावशे[षिते] ।
तत्कषा[यं तु संगृ]ह्य घृतप्रस्थं विपाचयेत् ॥ ५६ ॥
गर्भं च जीवनयािनां दद्यात्क्षीरं चतुर्गुणम् ।
विदार्यामलकानां च तथैवेक्षुरसस्य च ॥ ६० ॥
दत्वा घृतसमान्भागान्पचेत मृदुनाग्निना ।
रासायनिकमित्येतत्पेयं सर्पिः क्षयाव(प)हम् ॥ ६१ ॥
हृद्रोगक्षतकासानां ज्वरानां(णां) च विनाशनम् ॥६१॥क
* इति रासायनिकं नाम घृतं श्लो (?) *
शरमूलेक्षुमूलानि काण्डेक्षुनिक्षुवालिकाम् ।
शतावरीं पयस्याश्च विदारीङ्कण्कटारिकाम् ॥६२॥
जीवन्तीं जीवकं मेदां वीरामृषभकं बलाम् ॥६३॥
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ।
एषां त्रिपलिका(न्) भागा(न्) माषाणामाढकन्नवम् ॥६४॥

जलद्रोणे विपक्तव्यमाढकश्चावशेषयेत् ।
तत्र पेष्याणि मधुकं द्राक्षाफल्गूनि पिप्पलीम् ॥६५॥
आत्मगु[प्तामधुका]नि क(ख)र्जूराणि शतावरीम् ।
विदार्यामलकेक्षूणां रसाः स्युश्च पृथक्पृथक् ॥६६॥
सर्पिषश्चाढकं दद्यात्क्षीरद्रोणं च तद्भिषक् ।
साधयेद्घृतशेषञ्च सुपूतं योजयेत्पुनः ॥६७॥
शर्करायास्तुकाक्षीर्याश्चूर्णैः प्रस्थोन्मितैः पृथक् ।
पलिका गुडिकाः कार्यास्तां यथाग्नि प्रयोजयेत् ॥६८॥
एष वृष्यः परं योगो बृंहणो बलवर्द्धनः ।
अनेनाश्व इवोदीर्णो लिंगमर्प्पयते बली ॥६९॥

* इति शरमूलीयं नाम घृतम् श्लो गु पा (?) *

मायूरं वेशवारं तु कुव्यतोयार्पणे[1] पचेत् ।
रास्नाया दशमूलेन बला(ल)या मधुकेन च ॥७०॥
चतुर्भागावशेषेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन पयसा जीवनीयैश्च पेष्यकैः ॥७१॥
मायूरमेतच्छंसन्ति नास्ये(नस्ये) पाने च मूर्द्धनि ।
नाशनं शीर्षरोगाणामा(म)र्द्दितस्यार्व्वुदस्य च ॥७२॥
कर्णशूलानि वाधिर्यं मन्यास्तंभं हनुग्रहम् ।
पूत्यास्यां कर्णनादं च तालुशोषोपजिह्विकाम् ॥७३॥
रात्र्यन्धं पिंगलाक्षञ्च तिमिरं जलकाचताम् ।
अभिष्यन्दमधीमन्थं नेत्रयोश्चापकर्षति ॥७४॥

* इति मायूरं घृतं श्लो गु पा (?) *

[स]त्र्यूषणं सत्रिफलं सपाठा(ठं)
सचित्रकं स्यादथ देवदारु ।

---

१. "तोयार्मणे इति । अर्मणशब्देन द्रोणस्य ग्रहणम् ॥

राम्नापडीन्तामलकीं विदारी-
न्निदिग्धिकां गोक्षुरकं स्थिरां च ॥७५॥
स्यादात्मगुप्तामथ शारिवाश्च
मेदाश्च दद्याद्धि शतावरीश्च ।
एतानि सर्व्वाणि समानिकृत्वा
घृतं पचेत्क्षीरचतुर्गुणेन ॥७६॥
कासज्वरार्शांसि शिरोभितापं
तथैव भक्तानिभनन्दनश्च ।
हृद्रोगवाताष्ठिलवातगुल्मे
प्लीहे च क्षीणक्षतयोश्च दद्यात् ॥७७॥
अर्शांसि क्षुब्धान्क्षुभितं च वातं
निहन्ति सर्व्वान्विधिवत्प्रयुक्त[म्] ॥७८॥क॥

* इति महात्र्यूषणन्नाम(घृतं) श्लो पा (?) *

मुद्गपर्णीं माषपर्णीमृद्धिं मेदाश्च संहरेत् ।
महासहां क्षुद्रसहां तथा काकोलिमेव च ॥७९॥
अभीतपर्णी हंसपदीं षडीं कच्छुफलानि च ।
फल्गुक[ख]र्जूरमृद्वीकामाम्रमामलकानि च ॥८०॥
बिल्वाग्निमन्थं स्योनाकं काश्मर्यं पाटलां बलाम् ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रां बृहतीद्वयम् ॥८१॥
श्रृंगीमामलकीं द्राक्षां जीवन्तीं पुष्करागुरुम् ।
अभयाममृतामृद्धिम् जीवकर्षभकौ षडीम् ॥८२॥
मुस्तां पुनर्न्नवां मेदामेलां चन्दनमुत्पलम् ।
विदारीं वृषमूलानि काकोलीं काकनासिकाम् ॥८३॥
एषां पलोन्मितान्भागाञ्छतान्यामलकस्य च ।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत् ॥८४॥

ज्ञात्वा गतरसानेतानौषधानथ तद्रसः ।
तदामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥८५॥
पलद्वादशके भृष्ट्वा देया मत्स्यण्डिका पलाः ।
पञ्चाशत्परिपूताया लेहवत्साधु साधयेत् ॥८६॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ।
चतुष्पलं तुकाक्षीर्याः पिप्पल्या द्विपलं तथा ॥८७॥
पलमेकं वि(नि)दध्याच्च त्वगेलापत्रकेसरान्(त्) ।
इत्ययं च्यवनप्राशः परमुक्त( ो)रसायनः ॥८८॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते ।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्द्धनम् ॥८९॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ।
पिपासां मूत्रशुक्रस्थान्दोषांश्चाप्यपकर्षति ॥९०॥
अस्य मात्रां प्रयुंजीत योपरुद्धान्न भोजनम् ।
[अ]स्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा ॥९१॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुष्प्रकर्षं बलमिन्द्रियाणाम् ।
स्त्र[ ी]षु प्रक(ह)र्षं [बल]मग्निवृद्धिम्
वर्णप्रसादं पवनानुलोम्यम् ॥९२॥

रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोपि कुटिप्रवेशात् ।
जराकृतं रूपमथास्य पूर्व्वम्
विभर्त्ति रूप नवयौवनानाम् ॥९३॥

* इति च्यवनप्राशं घृतं श्लो (१५) *

---

१. ''रूपम्'' इति पाठः ।

हरीतकीं त्रिकटुकं वचां कटुकरोहिणीम् ।
सौवर्च्चलं यवक्षारो विडंगा चित्रकं तथा ॥ ९४ ॥
अक्षप्रमाणैरेतैस्तु घृतप्रस्थं विपाचयेत् ।
तत्सिद्धं स्रावयित्वाथ पाययीत यथाबलम् ॥ ९५ ॥
वातगुल्मं प्लीहं कासं सहिक्कां सक्रिमीनपि ।
दशांगो नाशयत्येतान्रोगान्वज्र इवासुरान् ॥ ९६ ॥

* इति दशांगं नाम घृतं श्लो ३ *

चित्रकं त्रिफलां चैव बृहतीं कण्टकारिकाम् ।
स्नुहीक्षीरं विडङ्गानि घृतं नवममुच्यते ॥ ९७ ॥
एकैकस्य तु कर्ष्षेण घृतस्य कुडवं पचेत् ।
चतुर्गुणेन तोयेन पाचयेन्मृदुनाग्निना ॥ ९८ ॥
अस्य काले पिवेन्मात्रामर्द्धकर्षसमन्विताम् ।
उष्णोदकञ्चानुपिवेदल्पत्वात्तस्य सर्पिषः ॥ ९९ ॥
विरिक्तं तु यवागूं स्यात्सर्पिषा परिमर्द्दिताम् ।
रसेन जाङ्गलानां वा भोजनन्दापयेद्भिषक् ॥ १०० ॥
वातगुल्ममुदावर्त्तं वर्त्मर्मशः[1] प्लि(ी)हन्तथा ।
ग्रहणीन्दीपयेन्मन्दां कुष्टदोषांश्च नाशयेत् ॥ १०१ ॥
नाराचकमितिख्यातं सर्पिर्न्नाराचसन्निभम् ।
भिषजा सन्नियोक्तव्यं नाराचमिव शत्रवे ॥ १०२ ॥

* इति नाराचकन्नाम घृतं श्लो ६ *

मूलकानां पुराणानां पलान्यष्टौ समानयेत् ।
तानि स्थाल्याञ्जलद्रोणे शनैर्मृद्वग्निना पचेत् ॥ १०३ ॥
बिल्वमात्रप्रमाणेन पिष्ट्वा चैनं निधापयेत् ।
पञ्चदाडिमसाराणां पलान्यत्र प्रपेषयेत् ॥ १०४ ॥

---

१ वर्त्मार्शः इत्यर्थः ।

पिप्पलीशृंगवेराभ्यां दद्यादत्र पलं पलम् ।
पलं चित्रकमूलस्य सुपिष्टस्यात्र दापयेत् ॥ १०५ ॥
घृतस्य च पलान्यष्टौ नवस्यात्र प्रदापयेत् ।
दध्नश्चात्र सुजातस्य समा मात्रा विधीयते ॥ १०६ ॥
एतत्सर्व्वं समानीय शनैर्मृद्वग्निना पचेत् ।
सुसिद्धं चैनमाज्ञाय परिपूतं निधापयेत् ॥ १०७ ॥
ये केचिद्व्याधयः काये कफानिलसमुद्भवाः ।
तेषां प्रायोगिकं श्रेष्ठं घृतमेतद्विधीयते ॥ १०८ ॥

* इति मूलकघृतं नाम श्लो ६ *

लशुनस्य शतं विद्वाञ्जलद्रोणे विपाचयेत् ।
चतुर्भागावशेषञ्च कषायमवतारयेत् ॥ १०९ ॥
तेन वैद्यः कषायेन(ण) विपचेत घृताढकम् ।
कल्कपेष्याणि चैतानि सिद्धमाने प्रदापयेत् ॥ ११० ॥
कर्षश्चित्रकमूलस्य पिप्पलीकर्षमेव च ।
चव्यायाश्च भवेत्कर्षः शृङ्गवेरपलं तथा ॥ १११ ॥
लवणानां च पञ्चानां पलार्द्धश्चाम्वलवेतसात् ।
तथा रामठकस्यापि हिंगुनोत्र पलं भवेत् ॥ ११२ ॥
तत्सिद्धं निस्रुतं सम्यक्सुगुप्तं तन्निधापयेत् ।
ततो मात्रां पिवेत्काले शृणु मे येषु तद्धितम् ॥ ११३ ॥
वाताष्ठीलासु गृध्रस्यां वातगुल्मे प्लि(प्ली)होदरे ।
वातश्लेष्माति(र्ति)पाण्डूनामर्शस्स्वथ भगन्दरे ॥ ११४ ॥
एकांगरोगिणां दद्यात् तथा सर्व्वाङ्गरोगिणाम् ।
लशुनाद्यं घृतं ह्येतदश्विभ्यां संप्रकल्पितम् ॥ ११५ ॥

* इति आश्विनं लशुनकं नाम घृतं श्लो गु ७ *

घृतन्दशगुणे तोये साधयेदा जलक्षयात् ।
ततो दशगुणे तोये साध्यमामलकन्तथा ॥ ११६ ॥
दशभागावशिष्टेस्मिन्घृतप्रस्थं विपाचयेत् ।
ततो यथाबलं मात्रां पाययेज्ज्वरकाशि[सि]तम् ॥ ११७ ॥
सर्व्वज्वरहरं सर्प्पिरेतद्ब्रह्माभिपूजितम् ।
दीर्घकालं प्रयुक्तन्तु भवेद्बल्यं रसायनम् ॥ ११८ ॥

* इति ज्वरहरमाश्विनं नाम घृतम् श्लो ३ *

विंशदामलकान्दद्याद्विंशतिश्च हरीतकीः ।
विभीतकानि विंशच्च त्रायमाणपलं भवेत् ॥ ११६ ॥
तथैव तिक्तरोहिण्या गुलूच्याश्च पलम्भवेत् ।
तोयार्द्धकंसे सिद्धन्तु चतुर्भागावशोषितम् ॥ १२० ॥
परार्ध्यं कुडवेनैतद्घृतमण्डमाधिश्रयेत् ।
तत्र कल्कीकृतानि स्युरावपेत नवानिह ॥ १२१ ॥
पिप्पलीनां पलार्द्धञ्च त्रिवृतार्धपलन्तथा ।
[कम्पि]ल्यकचतुर्था(ां)शं दश स्यान्निचुलानि च ॥ १२२ ॥
तत्सिद्धं निस्रुतं पेयं पाण्डुकामलनाशनम् ।
गुल्मवर्ध्मप्रमेहीनां(प्रमेहिणां) श्वयथौ कुष्ठरोगिणाम् ॥१२३॥
शिश्नव्याध्युदराणां च उदावर्त्तज्वरेषु च ।
वैरोध्यानाञ्च व्याधीनां पथ्यं सिद्धोत्तरं घृतम् ॥ १२४ ॥

* इति सिद्धोत्तरं नाम घृतं श्लो ६ *

दन्तीचित्रकमूलानामष्टौ कुर्व्वीत सन्नखाम्[1] ।
अभयाविंशतिं गुर्व्यः षट्पलं देवदारु च ॥ १२५ ॥
नींव(निम्बं)कदंबं वरुणं राजवृक्षं पुनर्नवाम् ।
चिरिबिल्वत्वचञ्चैव पृथक्षट्पलिकाः स्मृताः ॥ १२६ ॥

---

१ षट् नखात् इति युक्तं प्रतीयते ।

द्वे पञ्चमूले संहृत्य पृथगाढकसंमिते ।
विपाचयेदपान्द्रोणे सारसे मृदुनाग्निना ॥ १२७ ॥
चतुर्भागावशेषं तत्कषायमवतारयेत् ।
घृताढके पचेत्तस्मिन् पेष्यांश्चेमान्प्रदापयेत् ॥ १२८ ॥
पिप्पली पिप्पलीमूलं चव्यञ्च मरिचानि च ।
लवणानाञ्च पञ्चानामावपेदेककार्षिकान् ॥ १२९ ॥
एतद्धान्वन्तरं सर्प्पिः सर्वरोगनिवर्हणम् ।
पञ्च गुल्मानभिव्यक्तानष्टौ चोदरवृद्धयः ॥ १३० ॥
श्वयथुं शोषमर्शांसि प्रमेहांश्चैक(व) विंशति(तिं) ।
दीपयेद्ग्रहणीं मन्दां कुष्टान्बहुविधाञ्जयेत् ॥ १३१ ॥
अहीनां मूषिकानांच यच्च स्यात्कृत्रिमं विषम् ।
सर्व्वाहारेष्वनियमो बृंहणो देहमात्मनः ॥ १३२ ॥
एतद्धान्वन्तरं सर्पिः श्रेष्ठं ब्रह्माभिपूजितम् ।
यथावत्संप्रयुंजानः प्राप्नुयात्सिद्धिमुत्तमाम् ॥ १३३ ॥

* इति धान्वन्तरं घृतम् श्लो ६ *

चन्दनं स्यादुशीरञ्च पद्मकं कुरुविन्दकम् ।
त्रायमाणां समां दद्यात्तथा चन्दनशारिवाम् ॥ १३४ ॥
तथा प्रतिविषां चैव तथा तामलकी भवेत् ।
चतुर्गुणे जले वैद्यो घृतप्रस्थं विपाचयेत् ॥ १३५ ॥
तद्धि पीतं प्रमेहीनां(प्रमेहिणां) रक्तपित्तक्षयेषु च ।
अर्शसां भिन्नवर्च्चानां पाण्डुरोगे च तद्धितम् ॥ १३६ ॥
प्रणुदेद्ग्रहणीदोषांस्त्वग्दोषांश्च शरीरिणाम् ।
सर्प्पिरेतद्भवेत्पथ्यं विषघ्नममृतोपमम् ॥ १३७ ॥

* इति विषहरन्नाम घृतमाश्विनम् श्लो ४ *

चित्रकं त्रिवृतां चैव श्यामां च पलिकानि तु ।
[द्वाविं]शच्च हरीतक्यो द्रोणार्द्धं सलिलस्य च ॥ १३८ ॥
चतुर्भागावशेषन्तत्कषायमवतारयेत् ।
ततस्तेन कषायेण घृतप्रस्थं विपाचये[त्] ॥ १३९ ॥
न(ि )लकायाध(र्ध)कुडव(वं) . . . . . . . .
[अर्कक्षीरं सुधा]क्षीरं गर्भ्भंदत्वा विपाचयेत् ॥ १४० ॥
एतद्विन्दुघृतं नाम नैकरोगविनाशनम् ।
यावन्तः पिवते विन्दूंस्तावद्वेगान्विरिच्यते ॥ १४१ ॥
उदराणि प्लि(प्ली)हान्गुल्मान्कुष्ठाणि च गराणि च ।
[रक्त]गुल्मे च नारीणां गण्डमालाभगन्दरे ॥ १४२ ॥
पित्तार्शस्सूर्ध्ववातेषु रोगा ये सान्निपातिकाः ।
गदिते गरदत्ते च मधुमेहे च शस्यते ॥ १४३ ॥

* इति विन्दुघृतन्नाम *

सुधाक्षीरपलेनेह द्वे पले सर्पिषः पचेत् ।
कांपिल्यकपलं चैकं शाणार्धं सैन्धवस्य च ॥ १४४ ॥
तृवृतायाः पलश्चैकं कुडवोमलकी रसात् ।
तोयकंसेन विपचेच्छनैर्मृद्वग्निना भिषक् ॥ १४५ ॥
एतद्विन्दुघृतं नाम अश्विनोऽनुमतं शुभम् ।
विन्दवः पिवते यावत्ता[व]द्वेगान्विरिच्यते ॥ १४६ ॥
कर्षप्रमाणान्दातव्यं जठरी सोपगुल्मयोः ।
तथा कच्छपरोगी[गि]णां युञ्जी[त] मतिमान्भिषक् ॥ १४७ ॥
उष्णं वानुपिवेत्तोयमल्पत्वात्तस्य सर्पिषः ।
एष गुल्मान्सनिचयान्सशूलान्सपरिग्रहान् ॥ १४८ ॥
भिनत्त्येकप्रयोगेन(ण) वायुर्ज्जलधरानिव ।
पञ्चगुल्मबधार्थं हि सर्पिरेतत्प्रवर्त्तितम् ॥ १४९ ॥

सर्व्वासुरवधार्थाय यथा वज्रं स्वयंभुवा ।
एतद्बिन्दुघृतं प्रोक्तं सिद्धं सिद्धानुमानितम् ॥ १५० ॥

* इति बिन्दुघृतमाश्विनम् श्लो २ *

आजं पयः शृंगवेरं वचाशिग्रुर्हरीतकी ।
पिप्पल्यो मरिचं पाठा सैन्धवन्दशमं घृतम् ॥ १५१ ॥
शृंगवेरा[त्त्रयो]भागा लवणांताः पलीनकाः ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥ १५२ ॥
अस्योपयोगाद्बिन्येत(विन्देत) स्मृतिं मेधां च मानवः ।
जडगद्गदमूकत्वं पानादेवास्य शाम्यति ॥ १५३ ॥

* इति सारस्वतं घृतं श्लो ३ *

## इति द्वितीयोऽध्यायः समाप्तः ।



## [ तृतीयोऽध्यायः ]

बलातैलं प्रवक्ष्यामि वातरोगनिर्बर्हणम् ।
आत्रेयानुमतं सिद्धं बन्ध्यानां गर्भदं शुभम् ॥ १ ॥
[बला]याः खलु मूलानां शुष्कं पलशतं [भवेत्]
[गुडूच्य]ाः पञ्चाविंशच्च रास्नादशपलम्भवेत् ॥ २ ॥
प्रक्षाल्य जर्जरीकृत्वा पचेद्दिव्येन वारिणा ।
जलाढकशते सिद्धमाढकं चावशेषयेत् ॥ ३ ॥
कषायेण [परं तेन तैलाढकं विपा]चयेत् ।
दधिमस्तु च शुक्तश्च तथैवेक्षुरसो भवेत् ॥ ४ ॥
अजाक्षीरार्द्धभागां च शनैर्मृद्वग्निना पचेत् ।
[कल्कपेष्याणि चैतानि पलोन्मितानि दापयेत्] ॥ ५ ॥
बलातिबलयोर्मूलं सरलं देवदारु च ।
मुस्तं मधुकमंजिष्ठा तगरं पद्मकागुरुम ॥ ६ ॥
हरे[णवेलाव्याघ्रन]खं केसरं सुरसं षडीम् ।
मु[द्गपर्णि माषप]र्णीञ्जीवकर्षभकावुभौ ॥ ७ ॥
जानीयात्तद्यदा सिद्धमथैनमवतारयेत् ।
पत्रकल्कं च भिषजः प्रदद्यादवतारिते ॥ ८ ॥
तत्प्रसन्नं परिस्राव्य निदध्याद्भाजने शुचौ ।
ततः प्रयुंज्यान्मतिमान्यथाव्याधि यथाबलम् ॥ ९ ॥
प्रयोज्यमेतदभ्यंगे नस्तः पानानुवासने ।
आहारे कर्णयोश्चैव वस्तिषूत्तरवस्तिषु ॥ १० ॥
क्षयो वा यदि वा कासः श्वासो वा यदि वा ज्वरः ।
मूर्च्छा वा यदि वा च्छर्दिर्दौर्बल्यं भिन्नवर्णता ॥ ११ ॥
श्वयथुं शुक्रदोषांश्च गुल्मं वाप्यथवा प्लि(प्ली)हम् ।
वर्म्माणि ग्रहणीदोषं शोषमर्शोऽभितापिताम् ॥ १२ ॥

अपस्मारं धनुष्कं(ष्टं)भं तैलमेतच्चिकित्सति ।
त्वग्गताश्चैव ये वाता ये च मज्जानमाश्रिताः ॥ १३ ॥
सिरागताः स्नायुगतास्तथा सर्व्वगताश्च ये ।
सर्व्वाञ्च्छमयते वातानिति नास्त्यत्र संशयः ॥ १४ ॥
ऋतुकाले च नारीणां शिरःस्नातासु(स्नातेषु) दापयेत् ।
बन्ध्यापि लभते गर्भं प्रयोगेन(ण) समाचरन् (?)॥ १५ ॥
वर्णभेदप्रशमनमलक्ष्मीशमनं शिवम् ।
बलातैलं भिषग्दद्याद्बलेन्द्रियविवर्द्धनम् ॥ १६ ॥
* इति बलातैलं श्लो १६ *
बलाशतकषायेण तैलस्याद्धाढकं पचेत् ।
कल्कैर्मधुकमांजिष्ठा चन्दनोत्पलपद्मकैः ॥ १७ ॥
गन्धैश्च जीवनीयैश्च दुग्धाद्विद्रोणसाधितम् ।
बलातैलमरेन्द्रार्हमेतद्वातविकारनुत् ॥ १८ ॥
कल्पेनानेन रास्नाया गुडूच्या मधुकस्य च
स्वनामाख्यं पचेत्तैलं तद्वत्सहचरस्य च ॥ १९ ॥
* इति बलातैलं श्लो २ पा १ *
शतं सुतुलितं कुर्याद्बलामूलस्य पण्डितः ।
साधयेच्च जलद्रोणे चतुर्भागावशेषितम् ॥ २० ॥
पलानि दश चान्यानि बलाया दुग्धपेषिमम ।
लुंचितानां[1] तिलानान्तु कुर्यात्तैलाढकद्वयम् ॥ २१ ॥
चतुर्गुणेन पयसः पचेन्मृद्वग्निना तु तम् ।
अनेन विधिना तैलं दशकृत्वो विपाचयेत् ॥ २२ ॥
सिद्धमेतद्बलातैलं नैकरोगविनाशनम् ।
पानाभ्यंगे भोजने च नास्ये(नस्ये) वस्तौ च शस्यते ॥२३॥

---

१ लुंचितानां निस्तुषीकृतानामित्यर्थः ।

[वातव्य]ाधिषु सर्व्वेषु रक्तपित्ताश्रयेषु च ।
व्यापन्नानां च योनीनां नृणां नष्टे च रेतसि ॥ २४ ॥
तालुशोषं तृषां दाहं पार्श्वशूलमसृग्रजः ।
शोषं क्षयमथोन्मादं वैसर्पं [असृजोरुजम्] ॥ २५ ॥
[आयु]र्वृद्धिकरं बल्यं कासश्वासविनाशनम् ।
सर्व्वरोगहरं चैतद्बलातैलं प्रयोजयेत् ॥ २६ ॥

* इति बलातैलं श्लो गु *

सत्यवागश्विनौ देवौ भिषजौ देवपूजितौ ।
[उचितं] परमे[तद्धि] तैलं पुष्टिविवर्द्धनम् ॥ २७ ॥
सर्व्वव्याधिप्रशमनं राजार्हममृतोपमम् ।
अमृतन्नाम विख्यातं तैलं बलकरं नृणाम् ॥ २८ ॥
सुभौमौ(सुभूमौ) मधुकं जातमुद्धरेत्कृतमङ्गलः ।
पुष्येण [प्र]यतो विप्रान्स्वस्तिवाच्य समासतः ॥ २९ ॥
ग्राहयेत्स्वरसं तस्य चतुष्पात्रं विचक्षणः ।
प्रपौण्डरीकममृतां विसग्रन्थीं शतावरीम् ॥ ३० ॥
शृंगाटकान्यामलकानुदम्बरकशेरुकाः ।
क्षीरिणां चैव वृक्षाणां त्वचानि स्युः पृथक्पृथक् ॥ ३१ ॥
कुशकाशेक्षुमूलानि शरवीरणयोस्तथा ।
गुन्द्रानां[1] नडिकानां च मूलं क्रौञ्चानदानि[2] च ॥ ३२ ॥
वदरीश्च विदारीश्च वेतसं साड[ट]रुषकम् ।
निम्बशाल्मलिखर्जूरनाडि(रि)केर(ल)प्रियं[ग]वः ॥ ३३ ॥
पटोलं कटुजं द्राक्षां समृणालं च चन्दनम् ।
ककुभं चाश्वकर्णश्च लामज्जकधनञ्जयौ ॥ ३४ ॥

---

१ गुन्द्राणां इति पठितव्यम्, २ क्रौञ्चादनानि इति शुद्धं ।

कषायमधुराणां च शीतान्यपि च लाभतः ।
भागांश्चतुष्पलान्कृत्वा द्विद्रोणेऽपां विपाचयेत् ॥ ३५ ॥
रसेष्टभागशेषे तु कल्कैरेभिर्विपाचयेत् ।
बलां नागबलां जीवामात्मगुप्तां कशेरुकाम् ॥ ३६ ॥
नतं रसं च स्पृक्कां च सूक्ष्मैलां त्वचमेव च ।
जीवकर्षभकौ मेदौ मधुकं नीलमुत्पलम् ॥ ३७ ॥
कुङ्कुमं वर्णकरणमगुरुं पत्रमेव च ।
विदारीं क्षीरकाकोलीं वीरामपि च शारिवाम् ॥ ३८ ॥
शतावरीं प्रियंगुं च गुडूचीं पद्मकेसरम् ।
लामज्जकं चन्दनानि राजादनफलानि च ॥ ३९ ॥
मुक्ताविद्रुमशंखानां चन्द्रकांतेन्द्रनीलयोः ।
स्फटिकं रजतं हेमं मणिमौक्तिकमेव च ॥ ४० ॥
यष्टीमधुकमांजिष्टामंशुमत्यः पलोन्मितान् ।
श्लक्ष्णपिष्टानिमान्कृत्वा शनैर्मृद्वग्निना पचेत् ॥ ४१ ॥
तैलपात्राणि चत्वारि तैला[दष्ट]गुणं पयः ।
पयोर्धभागेन भिषक् प्रदद्यादा(द)म्ब्लकांचिकम्॥ ४२ ॥
शतशोऽथ विपक्तव्यं सहस्रगुणमेव वा ।
सम्यक्सिद्धस्य चाप्यस्य एतद्भवति लक्षणम् ॥ ४३ ॥
आलोड्यते करेणैव . . . ल उपस्थिते ।
स्वास्तिवाच्य द्विजातींस्तु प्रयतः कृतमंगलः ॥ ४४ ॥
प्रयोजयेत्तैलमिदममृतं देवपूजितम् ।
वस्त्यास्थापनपानैश्च नास्यै(नस्यै)रभ्यंजनैस्तथा ॥ ४५ ॥
सर्व्वरोगप्रशमनमिन्द्री[ि ]याणां बलावहम् ।
दा[ह]तृष्णापरीतानां श्रेष्ठमभ्यंजन शिवम् ॥ ४६ ॥

वृद्धानां बालजननं बालानामग[ङ्ग]वर्धनम् ।
कान्तत्वं स्त्रीषु सौभाग्यं प्रजाश्च बहुविस्तराः ॥ ४७ ॥

स्त्रियश्च गर्भं गृह्णन्ति प्रयोगादमृतस्य हि ।
अशीतिं वातजान्रोगान्रक्तजान्पित्तजांस्तथा ॥ ४८ ॥

श्लैष्मिकान्सन्निपातोत्थान्सर्वानेव चिकित्सति ।
सुपर्णचक्षुर्नास्येन(नस्येन) तथाभ्यंगादजायते ॥ ४९ ॥

पाप्महरमलक्ष्मीघ्नं श्रीमेवाभिविवर्द्धनम् ।
अस्य प्रयोगात्तैलस्य महर्षिश्च्यवनः किल ॥ ५० ॥

पुनर्युवत्वमापन्नो जरारोगविवर्जितः ।
आयुष्कामश्च भगवान् मार्कण्डेयो महानृषिः ॥ ५१ ॥

तैलमेतत्प्रयुंजानो दीर्घमायुरवाप्तवान् ॥ ५२ ॥

* इति अमृततैलं नाम श्लो २५ *

निष्पत्राणां मृदूनाञ्च मूलकानां रसाढकाम् ।
दध्यम्ब्लकांचिकानां च पयसश्चाढकाढकम् ॥ ५३ ॥

तैलाढकसमायुक्तं विपचेन्मृदुनाग्निना ।
रास्नां बलां गोक्षुरकं सैन्धवं शिग्रुकं वचाम् ॥ ५४ ॥

चित्रकं शृंगवेरञ्च पिप्पल्यो गजपिप्पली ।
भल्लातकं प्रतिविषां गर्भेन(ण)ानेन पाचयेत् ॥ ५५ ॥

तैलमेतत्प्रशंसन्ति मूलकानां हितं नृणाम् ।
ऊरुष्कं(स्तं)भे कटिग्राहे गृध्रस्यामपतन्त्रके ॥ ५६ ॥

बन्ध्या च लभते गर्भं पाप्मानञ्चापकर्षति ।
वर्ध्मकुण्डलपर्व्वश्च स्तम्भनं स्रंसनं तथा ॥ ५७ ॥

पानं मूलकतैलस्य रोगानेतान्नियच्छति ।
प्रभिन्नमिव मांतग[1]मङ्कुशः कुशलोद्यत ॥ ५८ ॥

* इति मूलकतैलं श्लो ६ *

दध्यारनालमाषोदकेक्षुरसमूलकरसानाम् ।
तैलवदरोदकानां प्रस्थान्प्रत्येकशो दद्यात् ॥ ५९ ॥
रास्नाबलाश्वगन्धां मधुकं समहौषधं ससुरदारुम् ।
स्योनाकसप्तमानां भागान्प्रत्येकशो दद्यात् ॥ ६० ॥
एतत्तदमृतकल्पं गवां पुरीषाग्निनाशनैः साध्यम् ।
अपहृत्य सन्निधेयं यथानुकूलं तथा सेव्यम् ॥ ६१ ॥
एतद्भोज्यं प्राहुर्नस्तः कार्यश्च वस्तिषु च देयम् ।
दोषोदरेषु देयं शाखावातेषु चाभ्यङ्गम् ॥ ६२ ॥
गृध्रस्य(ां) वातगुल्मे ..[2] दोषेप्यधोगते वाते ।
एतच्छूले पथ्यं प्लिहेपि चैतद्विधैवोक्तम् ॥ ६३ ॥
रसायनं वाड्[3]वलिना प्रणीतं नाम्ना त्विदं मूलकतैलमाहुः ।
पुंसाश्च दुष्टेन्द्रियपीडितानाम् स्त्रीणां च देयं प्रसवार्थिनीनाम् ॥६४॥

* इति मूलकतैलं श्लो ६ *

मूलकरसस्य प्रस्थः क्षीरप्रस्थश्च तद्भवेत्साध्यम् ।
जातं तद्दधि योज्यं स्य(ा)दथ प्रस्थेन तैलस्य ॥ ६५ ॥
यष्टिमधुकं रास्नां पाठां च गुडश्च शृंगवेरश्च ।
एताञ्जलेन पिष्ट्वा प्रमाणमेकैकमर्धपलम् ॥ ६६ ॥

---

१ मातंगम् इति युक्तं प्रतीयते ?

२. "योनि" इति केचित् योजयन्ति ।

३. वाड्वलिनाम्ना ख्यातः एक प्राचीनवैद्यः । अथवा यत् कात्यायनस्य वार्त्तिकमस्ति, तस्मिन् अपि अस्य वैद्यस्य वर्णनमागतं इति केचित् ।

लवणस्य च कर्षः स्यात्तद्विपचेदग्निना शनैर्मृदुना ।
एतत्तैलं सिद्धं पिबेत प्राग्भोजनं द्विपलम् ॥ ६७ ॥
भोजनविधिश्च कार्यः रुक्षः सूपोदनो भवेदत्र ।
भेषजमेतद्विहितं बन्ध्यानां पुत्रजननार्थम् ॥ ६८ ॥

* इति मूलकतैलं श्लो ४ *

समूलपत्रशाखस्य शतं सहचरस्य तु ।
चतुर्षु जलद्रोणेषु साधयेत्सूक्ष्मकुट्टितम् ॥ ६९ ॥
द्रोणावशेषे पूते तु पचेत्तैलाढकं शनैः ।
सहचरस्य च मूलानां पेष्यं दशपलं भवेत् ॥ ७० ॥
परिस्राव्य सुखोष्णे तु शर्करां तत्र दापयेत् ।
पलानि दश चाष्टौ च निर्मथ्य च निधापयेत् ॥ ७१ ॥
वस्तौ पाने तथाभ्यंगे नास्ये (नस्ये) चैव प्रशस्यते ।
एकांगिकं पक्षवधं हनुग्रहशिरोग्रहे ॥ ७२ ॥
अर्दितं वेपथून्मादं सर्व्वगात्रग्रहं ज्वरम् ।
गृध्रसीं वातगुल्मश्च भूतोपहतचेतसम्॥ ७३ ॥
अपस्मारं धनुष्क(स्त)म्भं ऊरुष्क(स्त)म्भमलासकम् ।
गण्डकुण्डलवर्ध्मानं हस्तजानुविकुंचनम् ॥ ७४ ॥
स्रंसनं सन्धिपर्व्वाणां कंपनं शोषणं तथा ।
तैलमेतत्प्रशमयेच्छित्वाभ्राणिव मारुतः ॥ ७५ ॥
अलाभे शर्करायास्तु क्षीरेण सह पाचयेत् ।
रोगानीकवधार्थाय[स्थापितं] तत्स्वयंभुवा ॥ ७६ ॥

* इति सहचरतैलं *

---

३. सूपोदनः अस्मिन्देशे "दाल भात" इति लौकिकपरिभाषा प्रसिद्धा ॥

निस्तुषाणां तिलानां तु तैलप्रस्थं विपाचयेत् ।
पलञ्च मधुकस्यात्र दद्यात्क्षीरं चतुर्गुणम् ॥ ७७ ॥
मृदुपाकं च तत्सिद्धं भूयः [सम्यक्] [वि]पाचयेत् ।
अनेन विधिना सम्यङ्मधुकस्य शतं पचेत् ॥ ७८ ॥
शतकृत्वो विपक्तव्यं शतपाकं निधापयेत् ।
पानाभ्यंजनयोश्चैव वस्तौ नास्ये च शस्यते ॥ ७९ ॥
भोजने चामृतप्रख्यं नराणां राजयक्ष्मिणां ।
हृद्रोगं तालुशोषं च पित्तगुल्मं प्रतानकम् ॥ ८० ॥
तृषामुन्मादवैसर्प्पं श्वासकासमसद्रजः ।
. . . . वृद्धञ्च सर्व्वतोभागमूर्ध्वगम् ॥ ८१ ॥
कामलाज्वरपाण्डुत्वमेतत्पानान्निगृह्णाति ।
पित्तपाकमथो दाहं विस्फोटक विचर्च्चिकाम् ॥ ८२ ॥
. . . . . . . म ये रोगाश्च पृथग्विधाः ।
तैलेनानेन शाम्यन्ते रजांसीव जलागमे ॥ ८३ ॥

* इति मधुयाष्ठकं नाम तैलम् *

हयगन्धामूलानां पलशतमुन्मीय भ[ाण्डे भृतम् ]
[क्षीरे]षु चतुर्षु साध्यं जलपादावशेषिते पूतम् ॥ ८४ ॥
मधुकं श्रृंगवेरञ्च सुरदारुं शतावरीम् ।
मंजिष्टानलदं कुष्टं द्वे करंजे सवर्षभूः ॥ ८५ ॥
[१]अमृणालं शतापुष्पां सुरसं रास्नां पयस्यां च ।
षडीं पुष्करमूलञ्च स्थिरां द्रवन्तीं पयस्याञ्च ॥ ८६ ॥
कर्षोन्मितैः सुपिष्टैरेभिः सर्व्वैः कषायमालोड्य ।
तैलाढकं सुखाग्नौ विपचेत्क्षीरञ्चतुर्गुणं दत्वा ॥ ८७ ॥

---

१ अमृणालमुशीरम् ।

तत्सिद्धं मृदुपाकं भाण्डे शुचौ निधातव्यम् ।
पानेभ्यंगेवस्तावुपयोज्यं भा[वना]विधौ च ॥ ८८ ॥
जडमूकखंजगद्गदऊरूस्क(स्त)म्भार्द्दिताः स्मृतिवियुक्ताः ।
पक्षक्षतावभग्नाश्च्युतनिष्पिष्टास्थिसन्धयः स्खलनाः ॥८६॥
क्षीणक्षताश्च शुक्रा ईर्ष्या श(ष)ण्ढाहनुग्रहगृहीताः ॥ ६० ॥

* इति अश्वगन्धातैलं *

मूलानामश्वगन्धायास्तुलार्द्धं क(ख)ण्डशः कृतम् ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ ६१ ॥
तैलाढकं समावाप्य क्षीरन्दद्याच्चतुर्गुणम् ।
कटाहे तद्विपक्तव्यं कल्कांश्चेमान्प्रदापयेत् ॥ ६२ ॥
एलाञ्च शतपुष्पां च कुष्ठं व्याघ्रनखं त्वचम् ।
मधुकं शृंगवेरञ्च देवदारुं बलां स्थिराम् ॥ ६३ ॥
रास्नां पुष्करमूलञ्च भूतिक्यं सपुनर्न्नवाम् ।
मां(मं)जिष्ठां नलदं पत्रं द्रवन्तीं सुरसं वचाम् ॥ ६४ ॥
श्वदंष्ट्राञ्च मृणालञ्च पयस्यां बहुपुत्रिकाम् ।
एषामक्षसमान्भागान्दत्वा गर्भं विपाचयेत् ॥ ६५ ॥
तत्सिद्धमविभक्तञ्च तदैनमवतारयेत् ।
पाने वस्तावथाभ्यंगे नस्तः कर्म्म[णि] भोजने ॥ ६६ ॥
येषु व्याधिषु दातव्यं तान्मे निगदतः शृणु ।
नराणां खंजमूकानामूरूष्कं(स्तं)भार्द्दितेषु च ॥ ६७ ॥
पक्षहीनावभग्नेषु च्युतभग्नास्थिसन्धिषु ।
एतत्स्याद्वातभग्नेषु [प्रण]ष्टेषु च धातुषु ॥ ६८ ॥
हनुग्रहे खडे (षण्डे) मेहे क्षिप्ता ये चापि वायुना ।
वातभग्नेषु दीनेषु तथा क्षीणेन्द्रियेषु च ॥ ६६ ॥

नष्टशुक्राश्च ये पुंसामीर्ष्याश(ष)ण्ढाश्च ये नराः ।
[भूतो]पहतचित्ताश्च ससृष्ट[ापह]तेन च (?) ॥ १०० ॥
विषमज्वरे रक्तगुल्मे विद्रधीगृध्रसीषु च ।
प्लिहोदरे वातगुल्मे तथा [[1]व्रणरुजासु] च ॥ १०१ ॥
व्यापन्नयोनयो याश्च [2]रक्तपित्तमसृग्दरम् ।
य[ा]श्च गर्भं न गृह्णन्ति फलकाल उपास्थिते ॥ १०२ ॥
स्थितसूती तथा वन्ध्या योनी दुष्टाश्च योषितः ।
व्यक्तं वन्ध्या लभेद्गर्भमृतुस्नाता न संशयः ॥ १०३ ॥
ऋतुकालेषु नारीणां सद्यःस्न[ा]त[ा]सु दापयेत् ।
बलवर्णकरं ह्येतन्मेधाजननमुत्तमम् ॥ १०४ ॥
स्मृतिसंजननं चैतद्बृंहणीयं महागुणम् ।
हंतारं सर्व्वरोगाणां बालानाञ्च विवर्द्धनम् ॥ १०५ ॥
चतुर्व्विधं प्रयोक्तव्यं भैषज्यममृतोपमम् ॥ १०६ ॥

* इति अश्वगन्धातैलं श्लो १५ पा *

अथ तैलं प्रवक्ष्यामि श्वदंष्ट्रा वातनिर्ज्जयम् ।
विधिवद्येन कल्पेन नराणां तच्छृणुष्व मे ॥ १०७ ॥
नभ[1]श्चैव नभस्यश्च द्वौ मासावृतुसत्तमौ ।
यत्र द्रव्याणि जायन्ते विविधानि महीतले ॥ १०८ ॥
अभिवृद्धानि वृष्टानि पर्ज्जन्ये कालवार्षिणि ।
मेदिन्यां जातस(श)स्यायामौषधानि ततोद्धरेत् ॥ १०९ ॥
अपुष्पफलवत्काले अरोगं क्षेत्रजं शुभम् ।
तत्समुद्धृत्य कल्याणे मुहूर्त्ते दिवसे शुभे ॥ ११० ॥

---

१, २ वीतव्याध्यधिकार ।

१. नभोनभस्यश्च द्वौ मासौ वर्षाकालस्य, प्रायशः तौ श्रावण-भाद्रौ (July-August) (August September) respectively.

चौक्षे चौक्षं समादाय क्षोदयित्वा उलूखले ।
ततो रसं पटे स्राव्य प्रमाणेनाढकं मितम् ॥ १११ ॥
तैलप्रसश(प्रस्थश्च) दातव्यः क्षीरन्दद्याच्चतुर्गुणम् ।
गुडस्य च पलान्यष्टौ श्रृंगवेरपलानि षट् ॥ ११२ ॥
तत्सिद्धं स्थापयेत्पात्रे शुचौ चौक्षे सुनिर्म्मले ।
तस्य मात्रां पिबेत्काले क्षीरं च ...... ॥ ११३ ॥
. . . गुडं खादेच्छृङ्गवेर समन्वितम् ।
जीर्णे स्नेहश्च भुञ्जीत षष्टिकं पयसोदनम् ॥ ११४ ॥
यांस्तु प्रशमयेद्रोगांस्तान्मे निगदतः श्रृणु ।
उदीर्ण . . . . . . . . . . . . . . . . ॥११५॥
एतद्वातप्रसक्तानान्तैलं परमपूजितम् ।
अजितं नाममर्त्यानामारोग्यबलवर्द्धनम् ॥ ११६ ॥
एतत्सर्व्वगतं वायु . . . . . . . . .
...... श्चापि चरमाणान्समुद्धरेत् ॥ ११७ ॥
वेपनं कम्पनश्चैव गृध्रसीनां तथैव च ।
भगन्दरे कुष्ठगुल्मे अपस्मारिणमेव च ॥ ११८ ॥
एतद्योनी(नि)विकाराणां युवतीनां तथैव [च] ।
[सर्व्वान् निहन्ति वै सद्यो रोगान् वज्र इवा]सुरान् ॥११९॥

* इति श्वदंष्ट्रा तैलं श्लो १२ *

आमलकरसद्विगुणं तैलं कुडवोन्मितं विपक्तच्यम् ।
भागा . . . . . . . . . . . . . . . . . . ॥ १२० ॥
. . पुण्डरीकं नवानि नीलोत्पलानि पिप्पल्यः ।
चन्दनमिति तत्तैलं सदांगुलिभ्यां नस्ततो दद्य[ा]त् ॥१२१॥

. . . . . . . . . . . . . . शीर्षसंभवं हन्ति ।
वृद्धमपि कालशिरसं कुरुते संवत्सरादूर्ध्वम् ॥ १२२ ॥
* इति नस्तः कर्म्मतैलं शीर्षामयहरम् *

जीवन्तीं मधुकं मेदां पिप्पलीं मदनं वचाम् ।
[ऋद्धिम रास्नां बलां बिल्वं शत]पुष्पां शतावरीम् ॥१२३॥
पिष्ट्वा क्षीरे जले सर्प्पिस्तैलश्च विपचेत्सह ।
अनुवासनिकं स्नेहमेतद्विद्याज्ज्वरापहम् ॥ १२४ ॥
शुद्धिमार्ग्गे हृते दोषे विप्रसन्नेषु धातुषु ।
[गतांगशूलो ल]घ्वङ्गः सद्यो भवति विज्वरः ॥ १२५ ॥
* इति ज्वरहरमनुवासनं नामतैलं श्लो३ *

पिप्पल्यो मधुकं बिल्वं शताह्वा मदनं वचाम् ।
कुष्ठं षडीं पुष्कराह्वां चित्रकं देवदारु च ॥ १२५ ॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन तु ।
अर्शसां मूढवातानां तच्छ्रेष्टमनुवासनम् ॥ १२६ ॥
गुदनिसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्टि(ष्ठ) दौर्बल्यं आनाहं वंक्षणाश्रयम् ॥ १२७ ॥
पिच्छास्रावं गुदे शोथं वातवर्च्चो विनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनम् ॥ १२८ ॥
* इति अनुवासनं तैलम् श्लो ४ *

पञ्च प्रस्था मूलकरसस्य दध्नश्च कारयेच्चतुरः ।
शुक्तस्य त्रयः कुडवास्तैलस्य तथा त्रयश्च स्युः ॥ १२९ ॥
चत्वारि सैन्धवपलान्यष्ट[मा]नश्चार्द्रशृंगवेरस्य ।
आर्द्रालाभे शुष्कं कर्त्तव्यं षोडशपलं स्यात् ॥ १३० ॥

गृध्रसीमेतच्छमयेत् ऊरुष्क(स्त)म्भश्च खल्लिवातांश्च ।
सर्व्वांश्च कटिरोगान्पानात्तान्वातरोगांश्च ॥ १३१ ॥

* इति वातहरं नाम तैलम् श्लो ३ *

मधुकं प्रपौ(पौ)ण्डरीकं बृहती सैन्धवमाढकीप्रसूतम् ।
बिल्वश्च(स्य) शलाटूनि हरे(द्)हरिद्रे पिप्पल्यो दशमं च देयम् १३२॥
[एतैर]क्ष(क्ष)समै[र्भागैः पि]ष्टः प्रस्थ(ा)र्धे पयसा ।
चतुर्गुणे[न] तैलस्य शनैर्व्विपूय सिद्धनस्तः कर्म्मणि चोद्यतेन दे[य]म्
ए[तेन वलिपलि]त[पि]ड[का]व्यङ्गमुखस्य [वि]दध्यात् ।
सर्व्वमुखरोगहरः . . ि [र]त्याहुराचार्याः ॥ १३४ ॥

* इति नस्तः कर्म्माणि तैलं वलीपलिताशिरोरोगविनाशनम् श्लो ३ *

आमलकरसप्रस्थः प्रस्थः स्याच्छातकुम्भस्य ।
भृङ्गरजस्य प्रस्थः प्रस्थस्तैलस्य दातव्यः ॥ १३५ ॥
एतांश्चतुरः प्रस्थान्विपाचयेत् आयसे नवे भाण्डे ।
तत्प्रियकसालसारस्य समुद्रे स्थापयेन्मासम् ॥ १३६ ॥
एतद्गोश्वखराणामुष्ट्राणां श्वेतपक्षिणां चैव ।
श्वेतत्वं नाशयति हि वलिपलितनाशनं तैलम् ॥ १३७ ॥

* इति वलिपालितनाशनं तैलम् *

फणिज्झकं सक्षवकं नादेयं नवमालिकाम् ।
सौवर्च्चलं वचां हिङ्गुं समभागानि कारयेत् ॥ १३८ ॥
अक्षमात्रैः पचेदेभिस्तैलप्रस्थं सुखाग्निना ।
सस्यिकामूत्रभागेन वत्सक्षीरे चतुर्गुणे ॥ १३९ ॥

---

१ सस्यका अत्र तु गवार्थे पाणिनीये तु "सद्गुणयुक्तः" इति अर्थनिर्देशात् । यथा "सस्यको मणिः" । एवं हि सस्यको वत्सः, (दीषहीनवत्सः) ।

ततोऽस्य नस्ततो दद्याद्गण्डमालाविनाशनम् ॥ १४० ॥

कृष्णसर्प्पं मृतं गृह्य सन्निधाय नवे घटे ।
अवलिप्य समृद्धेग्नौ वान्तर्दाहं विपाचयेत् ॥ १४१ ॥

तैलमिश्रेण तेनास्य गण्डमालां प्रलेपयेत् ।
सप्तरात्रप्रलेप(ा)द्धि गण्डमाला शमं प्रजेत (व्रजेत्) ॥१४२॥

* इति गण्डमालायोगवरः *

❀इति नावनीतके सिद्धसङ्कर्षे तैलपाकस्तृतीयोऽध्यायः❀
समाप्तः ।



# [ चतुर्थोऽध्यायः ]

अतः परं प्रकीर्णकयोगान्वक्ष्यामः । :—
भृष्टान्भृष्टुनानिस्तलान्सम्यक् क्षीरे निर्व्वाप्य पीषयेत्(पेषयेत्)।
वातरक्तप्रदेहैस्तैस्तिलैर्व्वा मधुकाश्रितैः(न्वितैः) ॥ १ ॥
शस्तः प्रलेपः सघृतैश्छगलीक्षीरगोधुमैः ।
वातरक्तहरं ज्ञेयं प्रधानमिदमौषधम् ॥ २ ॥
*इति वातशोणित प्रशमनं योगद्वयम् श्लो २*
सर्पिस्तैलं गुडं शुक्तं पञ्चमं विश्वभेषजम् ।
पीतमेतद्भवेत्सद्यस्त्वर्प्पणं त्रिकशूलनुत् ॥ ३ ॥
चित्रकं पिप्पलीमूलं वचा कटुकरोहिणी ।
पाठा वत्सकवीजश्च हरीतक्यो महौषधम् ॥ ४ ॥
एतदामसमुत्थानमतीसारं सवेदनम् ।
कफात्मकं सपित्तश्च पुरीषश्चाशु वन्धति ॥ ५ ॥
हरीतकी त्रिकटुकं हिंगु सौवर्चलं तथा ।
तथाह्यतिविषाश्चैव पाययेदु[ष्णवारि]णा ॥ ६ ॥
एतद् आमसमुत्थानं अतीसारं सवेदनम् ।
स्थापयत्यतिसंवृद्धं वेलेव वरुणालयम् ॥ ७ ॥
हरीतकीं प्रतिविषां हिंगुसौवर्च्चलं वचाम् ।
सैन्धवं चेति [पिष्टानि पाय]येत् उष्णवारिणा ॥ ८ ॥
आमाति[सारयोगोयं शस्यते सुचि]कित्सकैः ।
युक्तिरथो प्रयोक्तव्या वैद्येनार्थयशोर्थिना ॥ ९ ॥
*इति आमातिसार योगाः श्लो ४ गु*
जम्ब्वाम्रा( )स्थ तथा रोद्धं दाडिमस्य त्वचं तथा ।
रसांजनमनन्ता च सूक्ष्मेला पद्मकेसरम् ॥ १० ॥

माक्षीकभागसंयुक्तं महासाङ्गाहिकं मतम् ।
रसाञ्जनांजनावन्धा शैलेभा मुस्तकट्फल[म्] ॥ ११ ॥
जम्ब्वाम्रास्थि तथा बिल्वं याशवत्सकश(ा)ल्मलान् ।
धातक्यतिविषा लोध्रं फलीन्मेचीकगैरिकाः ॥ १२ ॥
सतण्डुलं गुडक्षौद्रं महा सांग्राहिकं पिवेत् ।
पिवेत्त्पुसवीजं वा रसां[ज]नसमायुतम् ॥ १३ ॥
त्वग्दाडिमाद्वत्सकाच्च पिवेत् वा तक्रसंयुताम् ।
योगद्वयमतीसारे महासांग्राहिकं स्मृतम् ॥ १४ ॥
विघुष्टशब्दौ श्रीमंतावश्विनौ भिषजां वरौ ।
योगं लोहितपित्तीनामर्शसां ज्वरितेषु च ॥ १५ ॥
वासवायोचतुं श्रेष्टं यदुक्तं ब्रह्मणा पुरा ॥ १५ क ॥
चन्दनं नलदं रोद्रं उशीरं पद्मकेसरम् ।
नागपुष्पञ्च विल्वञ्च भद्रमुस्ताथ शर्कराम ॥ १६ ॥
हिरिवेरञ्च(ह्वेरञ्च) पाठां च कुटजस्य फलं त्वचम् ।
श्रृंगवेरं सातिविषां धातकीं सरसाञ्जनाम् ॥ १७ ॥
आम्रास्थि जम्बुसारास्थि तथा मोचरसं भवेत् ।
नीलोत्पलं समंगांच सूक्ष्मेलां दाडिमत्वचम् ॥ १८ ॥
चतुर्व्विंशति चैतानि(रेतानि) समभागानि कारयेत् ।
तण्डुलोदकसंयुक्तं क्षौद्रेण सह पाययेत् ॥ १९ ॥
हितं लोहितपित्तीनामर्शसां ज्वरितेषु च ।
मूर्च्छातमोपसृष्टानां तृषार्त्तानाञ्च दापयेत् ॥ २० ॥
अतिसारञ्च च्छर्दिञ्च स्त्रीणाञ्च रजनिग्रहम् ।
अश्विभ्यामनुमतो योगो रक्तपित्तनिवारणः ॥ २१ ॥
प्रच्युतानाञ्च गर्भाणां स्थापनं परमुच्यते ॥ २१ क ॥

* इति रक्तपित्तिनामाश्विनो योगः श्लो १२ *

दधिसर्पिश्च तैलञ्च शृंगवेरं सफाणितम् ।
क्षौद्रं कर्कन्धुचूर्णं च सर्व्वमामथ्य पाययेत् ॥ २२ ॥
एष निर्व्वाहिका योगः प्रसह्य विनिवर्त्तयेत् ।
[लता] कुंजोपमं रुद्धं नदीवेगमिवानिलः ॥ २३ ॥
वदरीपत्रकल्कं वाप्यभयारोध्रयोस्तथा ।
कपित्थरससंयुक्तं सक्षौद्रं दधिना पिवेत् ॥ २४ ॥
प्रवाहिका वेदनयाभिभूतः [घृतं]ि [पवेद्]ाढकिमूलसिद्धम् ।
पूतेघृते धूप्य पुनः पचेत सवेदनां संशमयन्त्युदीर्णाम् ॥२५
(१)प्रवाहिकायां त्रपुसस्य वीजं पिष्टं पिवे[त् त]ण्डुल धान्य[केन]२५क
वृंहणं मधुरं शीतं स्निग्धं पानान्नमिष्यते ।
पित्तोपदिष्टशतञ्च कुर्यात् कासे क्षतात्मके ॥ २६ ॥
(२) म[धुकं] पिप्पली द्राक्षा ला[क्षा] शृंगी शत[ावरी] ।
[चतुर्गुणा तुगाक्षीरी] सर्व्वैश्च द्विगुणा सिता ॥ २७ ॥
लिह्यात्तन्मधु सर्पिर्भ्यां क्षतकासनिवृत्तये ।
(३) सशर्करां वा पयसा पिवेल्लांक्षां समांशिकाम् ॥ २८ ॥
क्षयकासं यथादोषं मांसक्षीर[घृ]ताशनैः ।
शमयेद्वृंहणप्रायैराहारैः स्रंसयेन्न च ॥ २९ ॥
(४) पिप्पली पद्मकं द्राक्षा संपक्कं वृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥ ३० ॥
(५) दशमूलात्मगुप्तैलापिप्पलीमूलचित्रकान् ।
गजापिप्पल्यपामार्ग्गं शंखपुष्पि षडी बलाम् ॥ ३१ ॥
पौष्करञ्च द्विपलिकान्यवाढकयुतान्पचेत् ।
द्रोणेऽपां तद्यवैः स्विन्नैः कषायमभयाशतम् ॥ ३२ ॥
तुलां गुडस्य तु पचेत्कुडवं घृततैल[योः]
कुडवं पिप्पलीनाञ्च दत्वा लेहे च शीतले ॥ ३३ ॥

मधुनः कुडवं दत्वा स्थापयेद्घृतभाजने ।
लिह्याद्यथाबलं लेहं खादेद्द्वे चाभये ततः ॥ ३४ ॥
सर्व्वकासान्नुदत्येष क्षयजं तु विशेषतः ।
श्वासहिक्कावतां स्वेदं स्वभक्तानां प्रयोजयेत् ॥ ३५ ॥
कुलत्थतिलमाषाम्बल(म्ल)घृततैलामिषोदनैः ।
बर्हितित्तिरिदक्षाणांरसैः सव्योषदाडिमैः ॥ ३६ ॥
सहिंगुविडमृद्वीकामातुलुंगरसार्द्रकैः ।
कुलत्थदाडिमाजाजीशुष्कमूलकसंयुतैः ॥ ३७ ॥
यवगोधूमशाल्यन्नं स्निग्धमुष्णञ्च भोजयेत् ।
(६) कुलत्थयवकोलाम्बुदशमूलबलाजलैः ॥ ३८ ॥
पानार्थं कल्पयेत्कासश्वासहिक्कानिवृत्तये ।
(७) षडीपुष्करजीवन्तिमुस्तनागरचोरकैः ॥ ३९ ॥
पिप्पल्या तामलक्या च सुरसैलागुरु त्वचम् ।
समांशबालकन्दत्वा(?)शर्कराष्टगुणा भवेत् ।
[लिह्यान्तु मधु] सर्पिर्भ्यां हिक्काश्वासनिवृत्तये ॥ ४० ॥
(८) क(ख)र्जूरं पिप्पली द्राक्षा शर्करा चेति तत्समम् ।
मधुसर्पिर्युतो लेहः श्वासहिक्का निवारणः ॥ ४१ ॥
(९) . . . . . . . . . शालि गोधूमवैकृतम् ॥ ४२ ॥
जांगलानां रसैः श(ी)तंमृद्व(ी)का शर्करा युतैः ।
श्रित(श्रृत)शीतैः पयो[ ि]भर्व्वा सघृतैः ससितोपलैः ॥४३॥
पिबेद्राक्षारसं शीतं शर्करामलकोदकम् ।
मृद्वीकां [पुष्करं]दार्वी(मि)क्षून्वापि प्रकामतः ॥ ४४ ॥
द्राक्षामलककर्जूरपिप्पलीमरिचान्वितम् ।
(१०) पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्प्पिषा ॥ ४५ ॥

(११) क(ख)र्जूरं पिप्पली द्राक्षा शीता लाजा समांशका ।
मधुसर्पिर्युतो लेहः पित्तकासहरः परम्(परः) ॥ ४६ ॥

(१२) वाश(स)ाकषायकल्काभ्यां घृतं समधुशर्करम् ।
सिद्धं तत्पित्तकासघ्नं सर्वपित्तविकारनुत् ॥ ४७ ॥
आपोथ्य क्षीरिणां शुंगांन् पचेत्क्षीरे चतुर्गुणे ।
द्राक्षाकल्कं घृतं सिद्धं लेह्यं तत्पित्तकासनुत् ॥ ४८ ॥

(१३) षोडशभिः जलपात्रैः मृद्वीकायाः पलानि दश षट् च ।
अष्टौ मधुकपलानि च छागान्मांसात्तुलार्धं स्यात् ॥ ४६ ॥
पादावशिष्टतोयं शीतं पूतं कषायमवतार्य ।
दत्त्वा कषायतुल्यं पयोऽथ नवसर्पिषः प्रस्थम् ॥ ५० ॥
ऋषभकजीवकमेदां विदारिवीकात्मगुप्तानाम् ।
भव्याक्षोडनिकोचकशृंगाटकपद्मवीजानाम् ॥ ५१ ॥
भागानक्षसमांशान् वाप्य संसाधयेत् मृद्वग्नौ ।
सम्यक् सिद्धे तास्सि(तस्मिन्) दद्यात् सितशर्करापलान्यष्टौ॥५२
मधुनश्च पलान्यष्टौ चतुष्पलं पिप्पलीचूर्णात् ।
समसक्तुकं इत्यभिधीयते घृतमिदं जनकेश्वरपूजितम् ॥५३॥
क्षीणे क्षतेल्पशुक्क्रे(क्रे)प्यथ सरुचि(धि)रपैत्तिकेषु रोगेषु ।
स्त्रीकामेषु च देयं वृष्यं बल्यं च घृतमेतत् ॥ ५४ ॥

(१४) द्राक्षामधुकखर्जूरविदारी सशतावरी ।
परुषकाणि त्रिफलां साधयेत् पलसंमितान् ॥ ५५ ॥
जलाढके पाद [शेषे] स[म]मामलकस्य च ।
घृतमिक्षुरसं क्षीरं अभयाकल्कपादिकम् ॥ ५६ ॥
साधयेत्तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात्पित्तकासघ्नं सर्वपित्तविकारनुत ॥ ५७ ॥

(१५) कफजे च्छर्द्दनं पूर्व्वं कासे लंघनमेव च ।
शस्ता यवान्नविकृतिर्यूषाश्च कटुतिक्तकाः ॥ ५८ ॥
पिबेद्धर्मांबु मद्यं वा पुराणं क्षौद्रसंयुतम् ।
व्यायामधूमौ सेवेत रुक्षोष्णान्यशनानि च ॥ ५९ ॥
पाययेत् सार्षपं तैलं कौसुंभमथवा भिषक् ।
पंचकोलकसिद्धं वा पिबेत् कासे कफात्मके ॥ ६० ॥
व्योषपुष्करमृद्वीका त्रिफलाषडिचित्रकैः ।
मधुतैलयुतो लेहः कफ[कासनि]बर्हणः ॥ ६१ ॥
(१६) त्र्यूषणं त्रिफला दारु विडंगा पद्मको बला ।
रास्ना च सर्व्वे तुल्याः स्युः शर्करा मधु सार्पिषी ॥ ६२ ॥
लेहयेत्तत्कृतं चूर्णं कफकासनिबर्हणम् ॥ ६२ ॥ क ॥
(१७) त्र्यूषणात्रिफले (१) ॥ ६३ ॥
(१) . . . . . . . . . . . .
. . . . . . मधु संप्रयुक्तम् ।
सपिप्पलीकश्च सनागरश्च
लीढ्वैव सद्यः शमयन्ति हिक्काम् ॥ ६४ ॥
(२) पिबेच्चगोवाल(ि)वषाण(धू)मं
श्रेष्ठस्य वा सर्जरसस्य धूमम् ।
धूमं कुशानां मधुसंप्रयुक्तं
घृतेन हिक्का सुसुखं लभेत ॥ ६५ ॥
(३) चूर्णं कृतं तिक्तकरोहिणीनां
चूर्णानि वा काञ्चनगैरिकस्य ।
मधुद्वितीया विनिहन्ति हिक्कां
नित्यप्रसक्तामपि शीघ्रमेव ॥ ६६ ॥
(४) लाजाः सुपिष्टा बदरास्थिमज्जा
स्यादंजनं श्रो(स्रो)तजमुत्तमश्च ।

क्षौद्रेण सर्व्वाणि सुयोजितानि
लीढानि सद्यः शमयन्ति हिक्काम् ॥ ६७ ॥

(५) सूक्ष्माणि चूर्णानि च सैन्धवस्य
पलं भवेद् द्वे च पले घृतस्य ।
हिक्काभिभूताय सुखाय देयम्
तथैव रक्ते मुखतः प्रवृत्ते ॥ ६८ ॥

* इति हिक्कायोगाः पंच श्लो १५ *

(१) पिप्पल्यामलकं द्राक्षा तुका(गु)क्षीरि सशर्करा ।
लाजा घृतं माक्षिकश्च लेहः कासनिवारणः ॥ ६९ ॥

(२) पिप्पल्यः शर्करा द्राक्षा लेहो माक्षिकसंयुतः ।

(३) हरीतकीं पिप्पलीश्च चूर्णं मधुयुतं लिहेत् ॥ ७० ॥

(४) त्र्यूषणं त्रिफलां चैव पद्मकं देवदारु च ।
रास्नां बलां विडंगानि सूक्ष्मचूर्णानि कारयेत् ॥ ७१ ॥
चूर्णैः समां शर्करां च लेहयेन्मधुसर्पिषा ।
एष लेहः प्रणुदति पञ्च कासान्समुत्थितान् ॥ ७२ ॥

(५) यवक्षारो विडंगानि हिंगु भार्ग्गी महौषधम् ।
सैन्धवं पिप्पली रास्ना तुल्यान्येतानि चूर्णयेत् ॥ ७३ ॥
सर्पिषा पाययेदेतत्तच्चूर्णं कास[नि]वारणम् ।
मन्दाग्नितां तमश्वासं हिक्कां चैवापकष(र्ष)ति ॥ ७४ ॥

(६) द्राक्षाप्रमाणाद्द्विशतप्रमाणा क्षौद्रेण पिष्ट्वा सह पिप्पलीभिः ।
एतेन चूर्णस्य सशर्करायाः कासेषु लेहः प्रवरः प्रधानः॥७५॥

(७) पिप्पलीवृहतीव्याघ्रीक्वथितः क्षीरसाधितः ।
सशर्कराघृतक्षौद्रः पथ्यः कासक्षयापहः ॥ ७६ ॥

(८) त्वक्क्षीर्यामलकं द्राक्षा लाजाः पिप्पली शर्कराः ।
द्राक्षा कर्कटको व्योषत्रिफलाजाजिचित्रकाः ॥ ७७ ॥

(९,१०) व्योषदारुविडङ्गानि त्रिफला शर्करा बला ।
कासिभिः सघृतक्षौद्राः लेह्याः श्लोकार्द्धिकास्त्रय ॥ ७८ ॥
* इति कासघ्नाष्टौ योगाः श्लो १० *
हरीतक्यः पंचविंशत् तावदन्तीपलानि च ।
चित्रकात्पंचविंशञ्च जलद्रोणे विपाचयेत् ॥ ७९ ॥
दन्तीसमं गुडं पूतं दद्यात्तत्राभयाश्च ताः ।
[तैल]ार्धं कुडवञ्चौक्षं त्रिवृ[तास्यात्चतुष्पलम्] ॥ ८० ॥
पादावशेषं तत्तोयं पूतं पुनरधिश्रयेत् ।
[चूर्णितं चार्ध प]लिकं पिप्पली विश्वभेषजम् ॥ ८१ ॥
तत्साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
कार्षिकाश्चात्र [भागाः स्युः त्वगेलापत्रकेशरात्] ॥ ८२ ॥
[ततो लेहपलं लीद्वा जग्ध्वा चैकां हरीतकीम्] ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ८३ ॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीरोगं कामलां विषमज्वरम् ॥ ८४ ॥
कुष्ठं प्लिहानमु[त्क्लेशम्] [शमय]न्त्युपसेविताः ।
निरत्ययश्चेत्क्रमः स्याद्ध्रुवो मांसरसोदनः ॥ ८५ ॥
* इति प्रस्थविरेको नाम श्लो ५ पा *
रोध्रं षडीं पुष्करमूलमेलां मूर्व्वां विडंगां त्रिवृतां यवानीम् ।
चव्यां प्रियंगुं क्रुमुदं विशालां किराततिक्तं कटुरोहिणीञ्च ॥८६॥
द्रोणेम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे ।
रसेर्द्धभागं मधुना प्रदत्त्वा पक्षं निधेयो घृतभाजनस्थः ॥८७॥
मध्वासवोयं कफपित्तमेहान् क्षिप्रं निहन्याद्द्विपलप्र[यो]गात् ।
पाण्ड्वामयार्शास्यरुचिग्रहण्यः दोषान्किलासं विविधांश्च कुष्ठान् ॥८८
* इति मध्वासवयोगो नाम *

(१) मधूकं मुस्तमृद्वीका कार्ष्मर्याणि परुषकम् ।
त्रायमाणमुशीराणि त्रिफलां कटुरोहिणीम् ॥ ८६ ॥
पीत्वा निशि स्थितं जंतुर्ज्वराच्छीघ्रं विमुच्यते ।
(२) पिप्पलीशर्कराक्षौद्रं घृतामिश्रं पयः श्रितम् (शृतम्) ॥ ६० ॥
तत्पंचसारं पातव्यं ज्वरकासक्षयापहम् ।
(३) (क) कलिंगका पटोलस्य पत्रं कटुकरोहिणी ॥ ६१ ॥
(ख) पटोलं शारिवा मुस्तं पाठां कटुकरोहिणी ।
(ग) निम्बम्पटोलं त्रिफलां मृद्वीकामुस्तवत्सकौ ॥ ६२ ॥
(घ) किराततिक्तममृतां चन्दनं विश्वभेषजम् ॥ ६३ ॥
(ङ) गुडूच्यामलकं मुस्तामर्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥ ६३ क ॥
(४) अरिष्टपत्रं सपटोलचन्दनं
सभद्रमुस्तामलकं हरीतकी ।
जलेन सिद्धाः सघृताः सशर्कराः
शमेंति त्रिस्थूणगतं ज(ज्व)रं नृणाम् ॥ ६४ ॥
(५) मधुत्तिकं द्वे त्रिफले सपाठे
भागौ च मंजिष्ठकशारिवायाः ।
जलोन्मितौ निर्मलपट्टपूतः
सर्व्वज्वराणां शमनः कषायः ॥ ६५ ॥
(६) चन्दनं पद्म[किञ्जल्कं मु]स्ता कटुकरोहिणी ।
वत्सकं त्रायमाणाश्च द्राक्षा वनपरुषकम् ॥ ६६ ॥
मधुकं शीतपाकश्च यष्टीमधुकशर्कराम् ।
जीवकर्षभकौ चोभौ तथैवामलकान्यपि ॥ ६७ ॥
. . . . . . . . . . . . . . . . . उलूखले ।
रात्रिपर्युषितं ह्येनदद्याच्छर्करया सह ॥ ६८ ॥

कषाय एष वात . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . . . . ॥ ९९ ॥
अभयाहिंगुपिप्पल्यो यवानीमाम्ब्ल(म्ल)वेतसम् ।
एतानक्षसमान्भागान्पिबेयु . . . . . . . ॥ १०० ॥
. . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . . . पनीयं परं स्मृतम् ॥ १०१ ॥
हृद्रोगे पार्श्वशूले च वात्गुल्मे च पूजितम् ।
कोष्ठस्थेषु च वा[तेषु . . . . . . . . . ।]
[प्रश]स्यते नास्यमेतच्छीर्षरोगविनाशनम् ॥ १०२ ॥
शिरोरुजायां सघृतः स[ह]चन्दनं कुष्ठमथो [वापि नतोत्पलं च]।
[यष्टयाह्वमे]ला कमलोत्पलं च प्रपौण्डरीकं सुरदारु कुष्टम्॥१०३
कुर्यात्समं पद्मकचोरकौ च शिरोरुजायां [सघृतं प्रदेहं] ।
. . . . . . . . . . . . . . . . . . . . . . . . ॥ १०४ ॥
घृतोत्तमं वावदरेण सिद्धं नस्तः प्रदद्या[द्व]भेदकान्ते ।
पश्चाद्घृतं चाप्यनुपाययेत् . . . . . . . . ...॥ १०५ ॥
. . . . . . . . . . . . . भुक्त्वा च भक्ष्यं लभते गुडेन ॥१०५क
(४) बिल्वमूलं फ[लं] चैव नस्तः कर्म्मणि [योजयेत्] ।
[शीघ्रमतेन योगेन शिररोगो प्रशाम्यति] ॥ १०६ ॥
(५) . . . . . संगृह्य तत्तैलं विपचेद्भिषक् ।
ततोस्य नस्ततो दद्याच्छीर्षरोगविनाशनम् ॥ १०७ ॥
. . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . नस्तः कुर्यात्पुनः पुनः ॥ १०८ ॥
(७) भागो पुराणतैलस्य तावत्स्यात् पाटलस्य च ।
. . . . . . . . . . . . . . . . . . ॥ १०९ ॥
[लला]टलेपः शस्तोयं ख्यातः शीर्षरुजापहः ॥ १०९क ॥

(८) लवणं श्रृंगवे(रं च . . . . . . . . . ।
. . . . . . . . . . . चित्रकतिन्दुके ॥ ११० ॥
वस्तमूत्रेण संयोज्य लेपः शीर्ष[रुजापहः] ॥ ११० क ॥

(९) . . . . . . . . . . . . . . . . . ।
कंडीरं अर्क्कमूलं च त्रिफला कटुसर्षपाः ॥ १११ ॥
गवां मूत्रे[ण संयोज्य लेपः शीर्षरुजापहः] ।
. . . . . . . . . . . . . . स्वराम्बुना ॥ ११२ ॥

* इति शीर्षामयहराः पंच योगाः श्लो १६ *

(१) . . . . . . . . . . . . . . . . . ।
[अजाजी चोर]कं चैव कण्टकार्याः फलानि च ॥ ११३ ॥
सूक्ष्मचूर्णमिदं कृत्वा कुर्यात्प्रध[मनौषुधम्] ।

(२) वार्त्ताकिः कूलका व्योष कुलत्थाढकी मुद्गजम् ॥ ११४ ॥
यूषमेतन्नरः पीत्वा प्रतिश्यायात्प्रमुच्यते ।
सक्तून्सुप्रयुतां कृ[त्वा घृतैरम्लकसंपुटे] ॥ ११५ ॥
. . . . . . . . . . . . . . . . . ।

(१) कंडीरमग्निना दग्ध्वा भस्म तद्गृह्य बु (द्ध)मा[न्] ।
दन्तान्तरं विमर्देत दन्तशूलार्दितो नरः ॥ ११६ ॥

(२) . . . . . भागेन दन्तशूलं प्रशाम्यति ।

(३) अजा[ज]ी [श्रृं]गवेरश्च विडंगानि [च संहरेत्] ।
[मधुशुक्तेन संयोज्य दन्ताग्रेण विमर्दयेत्] ॥११६ क॥
[दशमू]लं सुपिष्टं तु सर्पिषा सह दापयेत् ॥ ११७ ॥
[तत]स्तवा(दा)यसे भाण्डे अग्नि[ना . . . . . ।
. . . . . . . . . . . . . . . . ॥ ११८ ॥

(४) [निचुलं सर्षपं] श्वेतं पिप्पल्यो विश्वभेषजम् ।
क्षारश्च लवणश्चैव कवडो(लो) दन्तशूलनुत् ॥ ११९ ॥

(५) सोमराजि(जिं) [सुपिष्टं तु गुडिकां कारयेद्भिषक्] ।
[दन्तशूलापहम् कुर्यात् कवडग्रहमुत्तमम् ]॥ १२० ॥
[यवक्षारं शृंग]वेरं शुक्तपिष्टं विजानता ।
दन्तशूलापहं कुर्यात् कवडग्रहमुत्तमम् ॥ १२१ ॥
[* इति दन्तशूलहराकवलयोगाः] *
(१) [हिंगु शिग्रुक् निरयासं कुष्ठं तगरमेव च] ।
[शतपुष्पं च मुस्तां च तैलमेभिर्व्विपाचयेत्] ।
कर्णपूरणमेतेन कर्त्तव्यं कर्णशूलिणा(ना)म् ॥ १२२ ॥
(२) कर्णक्ष्वेडे [कर्णनादे कटुतैलेन पूरयेत्] ॥ १२३ ॥
[नादबाधिर्ययोः कुर्यात् कर्णशूलोक्तमौषधम्] ॥ १२४ ॥
(३) पिप्पल्यो बिल्वमूलश्च कुष्ठं मधुकमेव च ।
[मांस]ी वा(व्या)घ्रनखं रोध्रं सूक्ष्मेला देवदारु च ।
गर्भेना(णा)नेन तैलस्य प्रस्थं मृद्वाग्निना पचेत् ॥ १२५ ॥
[निष्पीड्य मूलकरसं दद्यात् स्नेहसमन्वितम्] ।
तेन कर्णे पिचुं [दद्यात् वस्तिकर्म च कारयेत्] ॥ १२६ ॥
[ तेनोपशाम्यते क्षिप्रं कर्णशूलं सदारुणम् ] ।
(४) [ शौकरं मूत्रमाहृत्य शिशोर्मूत्रेण वासु(प्लु)तम् ] ॥ १२७ ॥
पिप्पलीक्षारसिद्धं तु तैलं कर्णरुजापहम् ॥ १२७ ॥ क ॥
(५) . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . . कर्णशूलनिवारणम् ॥ १२८ ॥
(६) कुक्कुटस्य भवेन्मेदः स्थूलमाषाश्च वि . . ॥ १२९ ॥
. . . . . . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . यम् ॥ १२९क ॥
(१) प्रक्षिप्य सर्व्वमेकत्र दिवसा . . . . . ।
. . . . . . . . . . . . . . . . . . ॥ १३० ॥

. . . . . . . . . . . . . . . . . . तम् ॥ १३० ॥ क ॥

(२) कुकुभं सुमना तैलं वरणी . . . . . . ।

. . . . . . . . . . . . . . . . . . . . . ॥ १३१ ॥

. . . . . . . . . . . . . [विप]चेद्बुधः ।

सप्तरात्रमु . . . . . . . . . . . . ॥ १३२ ॥

. . . . . . . . . . . . . . . . . . ॥ १३२ ॥ क ॥

(३) [ क्षारं पिप्पलिकं कुष्ठं हरितालं मनःशिलाम् ।]

कट्फलञ्च मृणा[लञ्च तैलं भवति चाष्टमम्] ॥ १३३ ॥

[ एतेन पामा कुष्ठानि दद्रूनि किटिमानि च] ।

[विचर्च्चिका तथा श्वित्रम् सर्व्वमाशु विश्यति ] ॥१३४॥

(४) [ह]रिद्रा गैरिकं क्षौद्रं कासीसमथ सैन्धव[म्] ॥१३४॥क॥

. . . . . . . . . . . . . . . . . . . . . . ।

. . . . . . . . . . . . . . . . . . . . . . ॥ १३५ ॥

एतत्तैलं विपक्तव्यं कुष्ठालेपनमुत्तम[म्] ॥ १३५ ॥ क ॥

(५) . . . . . . . . . . . . . . . . . . . . ।

. . . . . . . . . . . . . . . . . . . . ॥ १३६ ॥

. . . . . . . . . . . . . . . . . पे]षयेत् ।

ऊषा(ऊष्ण)मण्डेन धोवित्वा दद्रु [कुष्ठविनाशन]म् ॥१३७॥

. . . . . . . . . . . . . . . . . . . . ।

. . . . . . . . . . . . . . . . . . . . म् ॥ १३८ ॥

सहरिद्रामिदं विल[वं] (बिल्वं) . . . . . . . . . ।

. . . . . . . . . . . . . . . . . . . ॥ १३९ ॥

. . . . . . . . . . . . . . . . . . . ।

. . . . . . . . . . . . . . . . . . . ॥ १४० ॥

. . . . . . . . . . . . . . . . . . . . ।
[ग]न्धिकमुस्तरोध्रस . . . . . . . . . ॥ १५३ ॥
. . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . . . ॥ १५४ ॥
कण्डुकोठपिड्का[श्च . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . . . . ॥ १५५ ॥
(१) . . . . . . . . . . . . . . . . . . . . ।
[निह]न्यद्बहुवा . . . . . . . . . . . . ॥ १५६ ॥
(२) . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . [प्रशाम्यति] न स(ं)शयः ॥ १५७ ॥
(३) कदल्याः क्षारतैलेन सिध्मानि परिमृक्षयेत् ।
एष . . . . दृष्ट अपामार्गोऽपि [शसत्र]त[ः] ? ॥ १५८ ॥
. . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . [श]शस्य रुचि(धि)रेण च ॥ १५९ ॥
(४) एरण्डस्तगरं कुष्ठं चित्रकं मूत्रपञ्चमम् ।
आटरुषकमूलं च षड्ग्रन्थां मधुकं तथा ॥ १६० ॥
प्रपुनाडं विडंगानि सैन्धवं परिपेलव[म्] ।
. . . . स्नुहिदुग्]ध(ं) (ि)सध्मान[ा म]ह(ौ)षधम् ॥१६१
* इति सिध्मयोगाः श्लो ६ *

(१) गुडेन श्रपयेत्क्षीरं कदुष्णं कामतः पिबेत् ।
मूत्रग्रहस्य भैषज्यं सद्यस्तत्मतमश्विनोः ॥ १६२ ॥
(२) मृद्वीकां शर्करां चैव दधिमण्डेन पाययेत् ।
मूत्रग्रहस्य भैषज्यं सद्यष्कं समुदाहृतम् ॥ १६३ ॥
(३) एर्व्वारुकस्य बीजानां अक्षमात्रं प्रपी(पे)षयेत् ।
युक्ताम्बललवणं पीत्वा मूत्रग्रहात् प्रमुच्यते ॥ १६४ ॥

(४) द्विकुंकुमस्याक्षमात्रं मृद्वीक(का)रसपीषिमम्(पेषितम्) ।
एकरात्रास्थितं पीत्वा मूत्रग्राहात्प्रमुच्यते ॥ १६५ ॥

(५) अयोरजः सूक्ष्मपिष्टं मधुना सह पाययेत् ।
मूत्रग्रहस्य भैषज्यं सद्यष्कं मतमश्विनोः ॥ १६६ ॥

(६) खराश्वहिंगु सुर[सां] हिरि(ह्री)वेरं रसांजनम् ।
चित्रकस्य च मूलानि त्रायमानां(णां) च संहरेत् ॥ १६७ ॥
एतानि समभागानि मधुना सह पाययेत् ।
पार्श्वशूलं मूत्रकृच्छ्रं सर्व्वमेतेन शाम्यति ॥ १६८ ॥

* इति [मूत्र]कृच्छ्रघ्नाः सप्त योगाः *

(७) मूत्रकृच्छ्रेषु तोयार्थः कायः क्वाथ्येन सर्व्वदा ।
मूलानां शरकाशेक्षुदर्भगोक्षुरवीरणैः ॥ १६९ ॥
पिबेत् कुसुंभपुष्पं वा तण्डुलांबु मधुद्रवम ।
क्षीरवस्तिं यथोक्ताम्बादद्यात् स्वेदा(ां)श्च कारयेत् ॥ १७० ॥

* इति मूत्रकृच्छ्रघ्ना नवयोगाः *

नासागमे तु रक्तस्य अवपीडः प्रशस्यते ।
द्राक्षेक्षुदूर्व्वास्वरसं शंखगैरिकचन्दनैः ॥ १७१ ॥

(१) शोधिते मूलकं सिद्धं तोयतक्रेण दापयेत् ।
हरीतकीं समगुडां खादेत् वा गुडनागरम् ॥ १७२ ॥

(२) पुनर्न्नवां देवदारुं पुराणं विश्वभेषजम् ।
श्वयथुप्रतियानार्थं त्र्यहं तु पयसा पिबेत् ॥ १७३ ॥

(३) हरीतकीन्देवदारुं शृंगवेरं पुनर्न्नवाम् ।
गोमूत्रेण पिबेज्जीर्णे स्नातं क्षीरेण भोजयेत् ॥ १७४ ॥

(४) हरीतकीनां त्रिपलं पलास्त्रिकटुकात्त्रयः ।
[मधु] तैलाश्च कर्षांशा गुड़स्यार्द्धतुलाघृता ॥ १७५ ॥

अगस्त्यान् मोदकानेतान् भुक्तस्योपरि भक्षयेत् ।
शोथार्शोग्रहणीदोषे कासोदावर्त्त[शां]तये ॥ १७६ ॥
(५) तुल्यांशास्त्रिफला मुस्तविडं[गकटुकत्रयम्] ।
[अग्नि]रयोरजस्तुल्यं तं लिहेन्मधुसर्पिषा ॥ १७७ ॥
क्षीरं चानुपिवेज्जीर्णे क्षीरेणैव च भोजयेत् ।
मूत्रं वा द्विगुणं क्षीरं पिवे[त्कुडव]संमितम् ॥ १७८ ॥
पिवेद्वा त्र्यूषणैः स[ार्धं] गोमूत्रं वा विरेचनम् ।
यवान्ना जांगलाः शीधुः स्वेदाश्चोष्णाश्च शोफहा ॥१७९॥
(१) छर्द्यां पिवेत्(त्तु) तृष्णार्त्तः सदाहस्तण्डुलाम्बुना ।
दाडिमं मधुकं रोध्रं बटशुंगाः सितां मधु ॥ १८० ॥
(२) लिहेद्वा मधुना च्छर्द्यां कोलमज्जांजनं सिताम् ।
पिप्पलीतण्डुला लाजा मक्षी(क्षि)काशकृता समम्॥ १८१ ॥
(३) आम्रास्थितोयचूर्णं वा तृष्णाच्छर्द्यतिसारनुत् ॥ १८२ ॥
(४) मातुलुंगस्य जम्ब्वाश्च पल्लवाः शर्करा मधु ।
लिहेच्छर्द्यां पिवेच्चैषां क्षुणानां शीतलं जलम् ॥ १८३ ॥
(५) लाजान् मधुयुतान्खादेत् सक्षौद्रं वा हरीतकीम् ।
खादेत्कपित्थं सव्योषं पिबेन्मुग्ददलांबुना ।
च्छर्द्यां चन्दनकल्कं वा पिवेदामलकीरसैः ॥ १८४ ॥
* इति च्छर्दियोगाः श्लोकाः १४ *
(१) तृष्णायां रक्तशालीनां तण्डुलान् सोत्पलाञ्जनान् ।
पक्वलोष्टमधुद्राक्षा कर्जूराणि परुषकम् ॥ १८५ ॥
जले स्थितं पिवेच्छीतं शर्करांबु पयांसि च ॥ १८५ ॥ क॥
(२) सितां विडंगा मधुकं पिप्पल्यो धात्रिसैन्धवैः ॥ १८६ ॥
सर्पिर्म्मध्वभया तैलं भागाः स्युर्म्मानतः समाः ।
भागाः षोडश सक्तूनामद्भिस्तं तर्प्पणं पिवेत् ॥ १८७ ॥

तृष्णा गुल्मज्वरार्शोघ्नं वृष्यं ग्रहणिदीपनम् ।
(३) शीताः प्रलेपाः शीताश्च जाङ्गला मधुरा रसाः ॥ १८८ ॥
धात्रिदाडिमवृक्षाम्ब्लमातुलुंगैर्हिहेच्छिर(ः) ॥ १८८ (क) ॥

* इति तृष्णाप्रशमना योगा *

(१) सुराह्वदारु त्रिफला समुस्ता कषायमुत्क्वाथ्य पिबेत्प्रमेही ।
क्षौद्रे[ण] युक्तामथवा हरिद्रां पिबेद्रसेनामलकीफलानाम्॥१८९
(२) हरिद्रां सर्व्वमेहेषु पिबेदामलकीरसैः ।
गोमूत्रभावितयवैः पिबेद्वा मधुतर्पणम् ॥ १९० ॥
(३) यवान्नविकृतिः शीधुर्ज्जांगलस्तृ(स्त्रि)फला मधु ।
कषायतिक्तकटुकं व्यपाया (व्यवायाः) मेहनाशनाः ॥१९१
(४) हरिद्रनिंबदर्भार्द्रक्षीरं काकुभचव्यजाः ।
कुष्ठश्यामैकपाठैला कषायाः श्ले[ष्म]मेहिनाम् ॥ १९२ ॥
(५) पित्तेसल्लिकि(शल्लकी)यष्टिह्व(यष्ट्याह्व) धात्रीश्वादंष्ट्रखादिराः।
मूत्राणि कटभीक्षीरं तक्रतैलासवाः हिताः ॥ १९३ ॥
(६) सर्व्वमेहेषु मधुना चूर्णं वा तिक्तकं लिहेत् ॥ १९४ ॥

* प्र[मे]हपशमनयो[गाः श्लो] *

(१) पूर्व्वमेवहितं विद्याद्विसर्प्पे रक्तमोक्षणम् ।
विरेको वमनं शीतैः स्त[म्भ]नं तिक्तसेवनम् ।
प्रलेपनं [क्ष]ीरपि(ष्टै)र्मास(सू)रैश [चणकैश्च वा] ॥१९५॥
(२) . . . . . . . . . . . . . . . शाद्वलैः ।
वीरामधुकमांजिष्ठ वेतसोत्पलकेसरैः ॥ १९६ ॥
जीवनीयपलाश . . . . . . . . कैः ।
घृताम्बुक्षीरपिष्टैस्तैर्लेपः सेकश्च शस्यते ॥ ७९७ ॥
(३) त्रिवृता त्रिफलां निम्बं . . प[ ]ोलु महौषधम् ।
श्रि(शृ)तः कषायः सगुड़ो विसर्प्पज्वरनाशनः ॥ १९८ ॥

(४) महातिक्तं पिबेत्सर्प्पिश्चूर्णं यच्चापि तिक्तकम् ।
एतैरेव घृतं सिद्धं विषमज्वरनाशनम् ॥ १९९ ॥

* इति विसर्प्पचिकित्सतं श्लो ५ पा *

(१) कषाया कामला पाण्डु पूर्व्वाद्यं ज्वरितः पिबेत् ।
हरिद्रां वासगोमूत्रां तयोर्व्वा दाडिमत्वचम् ॥ २०० ॥

(२) पिप्पलीद्राक्षयोः प्रस्थौ द्रोणे धात्रीरसे पचेत् ।
सिता शतार्द्धमधुकं शुण्डीत्वक्चीरकटफलम् ।
शीतान्मधुप्रस्थयुतात् ततश्चार्द्धपलं पिबेत् ॥ २०१ ॥

(३) कामलीपाण्डुरोगी च पिप्पलीं वा प्रयोजयेत् ॥ २०२ ॥
मुस्ताद्यं क्षीरवस्तिं वा यवान्नं जांगलं मधु ।
अयोरजीयं सेवेच्च या च पित्तज्वरे क्रिया । इति ॥ २०३ ॥

## ❀ इति नावनीतके मिश्रकोऽध्यायश्चतुर्थः ❀



# [पंचमोऽध्यायः]

अतः परं प्रवक्ष्यामि बलवर्णप्रसादनम् ।
येन मांसांनि वर्धन्ते बलं चैवोपजायते ॥ १ ॥
मूलानामश्वगंधायाः पञ्चविंशत्पलानि तु ।
क(ख)ण्डशच्छेदयित्वा तु स्थाल्यामाधा[य] साधयेत् ॥२॥
पादभागावशिष्टश्च ज्ञात्वा तमवतारयेत् ।
तद्रसं तु परिस्राव्य दृढे पात्रेऽवसेचयेत् ॥ ३ ॥
तस्मिन् कषाये मतिमान् औषधानि प्रकल्पयेत् ।
जीवनि(नी)[यानि] सर्व्वाणि शर्कराचूर्णमेव च ॥ ४ ॥
मधुसार्पिषश्च प्रसृतं पिप्पलीचूर्णमेव च ।
किंचिल्लवणिकं कृत्वा खजेनालोडयेद्भिषक् ॥ ५ ॥
आसिच्य बस्तावच्छिद्रे वस्तिकर्माणि कारयेत् ।
एकेन यदि वा द्वाभ्यां त्रिभिर्व्वापि प्रमाणतः ॥ ६ ॥
प्रत्यागते निरुहेऽस्मिन् परिषेकः सुखाम्बुना ।
ततो लोहितशालीनामोदनं मधुसर्प्पिषा ॥ ७ ।
क्षीरेण सह भुंजीत जांगलानां रसेन वा ॥ ७ क ॥

* इति अश्विनोरश्वगन्धावस्तिः श्लो गु पा (?) *

यष्टिमधुकासिद्धेन सार्पिषा चानुवासयेत् ।
जीवनीयविपक्कं वा सर्प्पि(ः) स्यादनुवासनम् ॥ ८ ॥
तेन मांसानि वर्द्धन्ते क्षयश्चाप्युपशाम्याति ॥ ८ क ॥

* अश्वगंधावस्ति श्लो पा *

रास्नाग्निमंथमथपाटलिश्च स्योनाककार्ष्मर्यनिदिग्धकां च ।
सराजवृक्ष[श्च सश]ालपर्णीं सपृश्निपर्णीं वृहतीञ्च दद्यात् ॥९॥

एतानि मूलानि तु सर्व्वशः स्युः एरण्डमूलञ्च तथैव चेयम् ।
द्वे द्वे पले चात्र भवेत्प्रमाणं द्रोणेत्वपाञ्चैव पचेत्कषायम् ॥१०॥

पा[दाव] शेषन्तु कषायमेतत्प्रक्षिप्य कल्कान्विदधीत सूक्ष्मान् ।
कुष्ठस्य यष्टिमधुकस्य चैव तथैव ये पीतकस[र्षपश्च] ॥११॥

[. . . . . . . . . . . . . . . .क]लकं विदद्ध्यान्मधुकस्य चैव ।
आरोग्यतेजोग्निवयोबलायुर्ददाति जीर्णेष्वपि पौरुषञ्च ॥१२॥

वाते . . . . . . . . . . . . . . . . . . . . . . ।
. . . . हृद्यमरोचके च वन्ध्यासु दुष्टे प्रचुरे पुराणे ॥१३॥

प्रमेहकण्डुक्षतयोनिदोषे पाण्ड्वामया[ ']र्शो ग्रहणीप्र[दोषे]॥१४॥

* इति [रा]स्न[ा]द्य[वस्ति] श्लोक ५ [पा] (?) *

. . . . . . . . . राज]र्षिरात्मवान्सुप्रभस्त्विहार्याभिः ।
हबु(पु)षावस्तिं तां मे निबोधत् सुखोपभोज्यतमाम् ॥ १५ ॥

प्रसृतः प्रसृतः प्रस्थः प्रस्थोर्द्धपलं प्रमाणतः प्रस्थः ।
हवुषावंक्षणयवक्षारसलिलसैन्धवयुतानाम् ॥ १६ ॥

कर्त्तव्यमेतदा जलपोरक्षयात्सादपेत् लवणहृतम् ।
सिद्धपूतं सलवणमथ च खजेत्सर्पिषा सार्द्धम् ॥ १७ ॥

सुखतन्त्राणां नृणां परिणतवयसां प्रगाढशक्तां च ।
एषः सुखोष्णो वस्तिः प्रणिधातव्यः सकृत्सर्व्वैः ॥ १८ ॥

अन्नमिवकालभोज्यः सुखपरिहार्यो न चात्र परिहार्यम् ।
तेजोग्निवीर्य्यबलपौरुषायुषां वर्द्धनोप्येष ॥ १९ ॥

* इति हवुषा वस्ति श्लो ५ *

मधुतैलसमे स्यातां ताभ्यां तुल्यं सुखोदकम् ।
कर्षश्चशतपुष्पायाः कर्षार्द्धः सैन्धवस्य च ॥ २० ॥

एष वैशेषिको वस्तिर्द्दीपनीयो रसायनः ।
बृंहणीयश्च बल्यश्च विद्याद्यवनसंज्ञितः ॥ २१ ॥
स्त्रियः संभोजनं यानं व्यायामं शिशिरोदकम् ।
अस्मिन् प्रणिहिते वस्तौ यथा काममवाप्नुयात् ॥२२॥

* इति मधुतैलोदको वस्तिः श्लो ३ *

तैलस्थाने घृतं दद्यात् तोयस्थाने भवेत्पयः ।
शेषं पूर्व्वेण तुल्यं स्यात्सवस्तिः सर्व्वसाधकः ॥ २३ ॥
तुल्यं मधु च तैलञ्च रास्ना ताभ्यां समा भवेत् ।
शताह्वाया भवेत्कर्षः पिप्पलीनां तथैव च ॥ २४ ॥
यष्टिमधुककल्कश्च कर्षार्द्धलवणोत्तमात् ।
एष रासायनो वस्तिर्बल्योबृंहन(ण)दीपनः ॥ २५ ॥
निरुपद्रवोयावनश्च वृष्यो वीर्य्यबल[ा]वहः ।
गाढ विण्मूत्रकृच्छ्राणि गुल्ममेहार्शबध्म(ब्रध्म)नुत् ॥२६॥

* इति तैलाद्यो वस्ति श्लो ४ *

परिवेष्टय कुशैरार्द्रैरार्द्रवृंत्तानि शाल्मलेः ।
कृष्णमृत्तिकया लिप्य स्वेदयेद्गोमयाग्निना ॥ २७ ॥
[वि]शुष्कां मृत्तिकां ज्ञात्वा गृह्य वृत्तानि शाल्मलेः ।
उलूखले समायोज्य मृद्गीयात् पयसिश्रृ(शृ)ते ॥ २८ ॥
पिण्डं मुष्टिसमं कृत्वा तन्मूलं तैलसर्प्पिषोः ।
स्नेहितं मात्तया युक्तम् कल्केन मधुकस्य च ॥ २९ ॥
[वस्तिमभ्यक्त]गात्ताय दद्यात्प्रत्यागतेथ च ॥२९॥क॥

[20th and 21st leaves missing]



## [ षष्ठोऽध्यायः ]

मंत्र्यत्रिगुणः परिहारः चतुर्गुणं ब्रह्मचर्यमित्याह भगवानात्रेयः ।
पिप्पली वर्द्धमानस्य गुणाः कर्म्म च केव(व)लम् ॥ १ ॥
प्र[व]क्ष्याम्यनुपूर्व्वेण प्रजानां हितकाम्यया ॥ २ ॥
न ह्येतदमृतं पीत्वा पश्चात्तप्यंति मानवाः ।
दर्शयत्येव सिद्धं हि पाणावामलकं यथा ॥ ३ ॥
तस्माल्लक्ष्मीश्च पुष्टिश्च प्रजां मेधाश्च कांक्षता ।
रसायनमिदं सोम्यं कार्यमायुर्विवर्द्धनम् ॥ ४ ॥
जीवनीयानि पीत्वा तु स्निग्धो वान्तविरिक्तवान् ।
कृतसंसर्जनः काले पुण्याहेनारभेत्ततः ॥ ५ ॥
पुनर्व्वस्वथ पुष्येण श्रवणेन श्रविष्ठया ।
त्रिषूत्तरेषु हस्तेन सोमे योगमुपागते ॥ ६ ॥
उपोषितः शिरः स्नातः शुक्लवासा जितेन्द्रियः ।
अभ्यर्च्य देवतान्विप्राश्चैकां खादेत पिप्पलीम् ॥ ७ ॥
ततश्चानुपिवेत्क्षीरं गव्यं छागमथा[पि]वा ।
जीर्णे तस्मिंस्तु भुंजीत शालीनां पयसोदनम् ॥ ८ ॥
एवमेतन्नरः खादेद्वर्द्धमानं सदाहनि ।
शतं पूर्णं भवेद्यावद्दशवर्षास्तथैव च ॥ ६ ॥
ततोन्तेष्यवकर्षस्य सप्तरात्रं पयोदनम् ।
प्रायश्चानु ~ भोक्तव्यं[पयसोन्नश्च भोक्तव्यं] तथा मुग्दरसोदनम् ।१०
सप्तरात्रे तृतीये तु जांगलो मधुरो रसः ।
भोज्यं पयं च पानीयं शृतशीतं गुणान्वितम् ॥ ११ ॥
गृहे निवाते चासीत सततं हितसेवि च ।
ततः क्रमेणामलकमम्म्लार्थमुपकल्पयेत् ॥ १२ ॥

वृक्षाम्ब्लं दाडिमाम्ब्लश्च सदा स्नानश्च शलीयेत् ।
अनेन विधिना क्षिप्रं पुष्टिं लभाति मानवः ॥ १३ ॥
प्रमदा लभते गर्भं वन्ध्याचापि [प्रजा]यते ।
शाम्यंत्यनेन श्वित्राणि राजयक्ष्मा हलीमकः ॥ १४ ॥
अपस्मारस्तथोन्मादो ज्वरश्च विषमागतः ।
अनेकशः प्रयुक्ते तु वलि[पलित ना]शनम् ॥ १५ ॥
वण[ ँ ]तेजो बलाधीनं अग्नेश्चोत्तमजीवनम् ।
कुष्ठरोगनिहन्तारमारोग्यजनन[ ं ] शिवम् ॥ १६ ॥
शुक्र[बला प्रणष्टस्य इं ]द्र[याणं] प्रस[ादनाः] ।
पिप्पल्यो हि शिवाः काये कटुका मधुरान्वययाः ॥१७॥
स्निग्धाश्च शीतवीर्याश्च व्यवापि(य)न्यो गुणान्विताः ।
कटुकत्वात् कफे पथ्याः स्नेहाच्च पवने हिताः ॥ १८ ॥
शैत्यात् पित्तप्रशमना युज्यंते सर्व्वकर्म्मसु ।
त्रिभ्यः प्रवर्त्तते चाद्यः कल्पः पंचभिरेव च ॥ १९ ॥
अष्टको दशकश्चान्यो बलकालमवेक्ष्य च ।
क्षीरानुपानास्ताः कार्याः तथा क्षीरोपसेवनाः ॥ २० ॥
नियमश्च यथा दृष्टमाशिषश्च यथाश्रुताः ।
तस्मात् नियममालंव्य पुरुषेण यथाक्रमम् ॥ २१ ॥
प्रयोज्यमिदमारोग्यश्रीबलायुर्व्विवर्द्धनम् ।
पिप्पलीवर्द्धमानस्य कल्पोश्विभ्यां प्रकल्पितः ॥ २२ ॥
अनसूयिना प्रयोक्तव्यो यथा सिद्धिमवाप्नुयात् ॥२२॥क॥
समूलाश्च सपत्राश्च सपत्रां सफलां [तथा] ॥ २३ ॥
काकमाचीं तु प्रत्यग्रां संहरेन्मतिमान्नरः ।
तुला पादं सुसूक्ष्मं तु जलद्रोणे विपाचयेत् ॥ २३ ॥ क ॥

चतुर्भागस्थिते तत्र तैलप्रस्थं विपाचयेत् ।
चतुर्गुणेन पयसा कल्कांश्चेमान्विधानवित् ॥ २४ ॥
प्रपौण्डरीकं मधुकं रास्नामूलं शतावरीम् ।
वडगा(विडंगं) शतपुष्पां च स्वयंगुप्ताफलानि च ॥ २५ ॥
एतदभ्यंजने पाने नस्तः कर्मानुवासने ।
अशीतिं वातजान् रोगांस्तैलमेतद्व्यपोहति ॥ २६ ॥
मण्डूकपर्ण्याः स्वरसः प्रयोज्य(ः)
क्षीरेण यष्टिमधुकस्य चूर्णम् ।
रसं गुडूच्यास्तु समूलपुष्प्या
आयुष्प्रदान्यामयनाशनानि ॥ २७ ॥
[बला]ग्निवर्णस्मृतिवर्द्धनानि
मेध्यानि चेमानि रसायनानि ।
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः
[मेध्या] विशेषण तु शंखपुष्पी ॥ २८ ॥
घृतमाक्षिकसंयुक्तं मधुकं यः पिबेन्नरः ।
क्षीरानुपायी स्त्रीवर्ज्यः स जीवेच्छरदां शतम् ॥ २९ ॥
पंचाष्टौ सप्तदशचापि [पि]प्पल्यो मधुसर्प्पिषा ।
रसायनगुणान्वेषी मासमेकं प्रयोजयेत् ॥ ३० ॥
तिस्रस्तिस्रस्तु पूर्व्वाह्णे भुक्ताग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जितः ॥ ३१ ॥
प्रयोज्या घृतसंमिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयम् ॥ ३२ ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषतज्वरम् ।
पीनसं स्वरभेदश्च गुल्मं वातम(ब)लासकम् ॥ ३३ ॥

* पिप्पली प्रयोगः श्लो ५ *

क्रमवृद्धया दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत्पयसा सार्धन्तथैवानुपिबैन्नरः ॥ ३४ ॥
जीर्णे जीर्णे च भोक्तव्यं षष्टिकं क्षीरसर्प्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोयं रसायनः ॥ ३५ ॥
पिष्टास्ता बलिभिः सेव्या शृता मध्यबलैर्न्नरः ।
यस्त्रिपिप्पलिपर्यन्तः प्रयोगः स तु कन्य(कनीय)सः ॥३६॥
वृहूणं स्वर्यमायुष्पं प्लिहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ ३७ ॥

* इति पिप्पलीप्रयोगोद्वितीयः *

शरन्मुखे नागवलां पुष्येणोद्धारयेद्भिषक् ।
मूलं तस्याः शुचिर्भूत्वा सूक्ष्मचूर्णानि कारयेत् ॥ ३८ ॥
तस्य चूर्णस्य कर्षे तु दुग्धेनालोड्य पाययेत् ।
जीर्णे दुग्धश्च पातव्यं अन्नश्च परिवर्ज्जयेत् ॥ ३९ ॥
क्रमशः सप्तरात्रेण वर्धयीत(वर्द्धयेत) पलं पलम् ।
ततः पलीनं पातव्यं यावन्नस्यादुपद्रवः ॥ ४० ॥
अपश्यतश्च स्त्रीशूद्रं आरण्यश्चैतदुच्यते ।
जातोपसर्ग्गं यक्ष्माणमप्येकादशरूपिकम् ॥ ४० क ॥
रसायनमिदं हन्ति सदा चायुश्च वर्द्धते ।
एष एव तु कल्पः स्यान्मधुकस्य रसायने ॥ ४१ ॥
मण्डूकपर्ण्याश्च तथा शृङ्गवेरस्य चोच्यते ।
एतदावलिकं प्रोक्तं रसायनमनुत्तमम् ॥ ४२ ॥

* इति नागबला प्रयोगः श्लो *

शुभे मार्ग्गशिरे मासे संशुद्धो वमनादिभिः ।
उपेतफलपुष्पान्तु का(क)चमा[च]ीं प्रयोजयेत् ॥ ४३ ॥

पलानि दश शुद्धायाः का(क)चमाच्याः समाहितः ।
पचेत्कार्ष्णायसे पात्रे तैलार्धेन शनैर्भिषक् ॥ ४४ ॥
तस्य मात्रां प्रयुंजीत षष्टिकान्नञ्च भोजये[त्] ।
तेन शाकेन भुंजीत मात्रया षष्टिकोदनम् ॥ ४५ ॥
अनुपानं पिबेच्चात्र जलमामलकैर्युतम् ।
एकविंशतिरात्रं तु प्रयोगमिदमुत्तमम् ॥ ४६ ॥
[द्विसप्त]रात्रं मध्यं तु सप्तरात्रं तथा परम् ।
प्रयोगमाचरेदेनं ग्रामधर्म्मञ्च वर्जयेत् ॥ ४७ ॥
न चाचरेद्दिवास्वप्नं व्यायामं च विवर्ज्जयेत् ।
क्रमशश्च प्रयोगान्ते रसानभ्यवहारयेत् ॥ ४८ ॥
न चातिवेलं भुंजीत न चासात्म्यं कथञ्चन ।
एष प्रायेण वृद्धानां यौवनं पुनरानयेत् ॥ ४९ ॥
बलिं हन्याद्धतंवायुः प्राणिनां सन्निवर्ज्जयेत् ।
ये चोपहतपुंस्त्वास्तु तेषां पुंस्त्वं विशोधयेत् ॥ ५० ॥
विजातिभिश्च संयुक्ताः कर्म्मभिर्व्विविधैः शुभैः ।
सेव्यमाना यथेष्टन्तु क्रमात्समुपनामयेत् ॥ ५१ ॥
धन्यं यशस्यमायुष्यं कल्याणं मंगलं परम् ॥ ५२ ॥

* इति काचमाची प्रयोगः *

त्रिफलांच समां कुर्यान्नीलीं नीलोत्पलानि च ।
अंजनं पिप्पलीमूलं पत्रं सहचरस्य च ॥ ५३ ॥
त्वचमर्जुनवृक्षस्य फलं पिण्डारकस्य च ।
जम्बूमूलकषायं च जम्बूमूलाच्च मृत्तिकाम् ॥ ५४ ॥
भृंगकोलोहचूर्णञ्च अक्षमात्राणि कारयेत् ॥ ५५ ॥
एतद्वैभीतके तैले शनैर्मृद्वग्निना पचेत् ।
ततः संशोधनं कृत्वा नस्तःकर्म्मसमाचरेत् ॥ ५६ ॥

तिल तैलेन कृसरां मांसं भुंजीत वै नरः ।
तृषितेन च पातव्यं त्रिफलासलिलं तथा ॥
तोयकृत्यं यदन्यच्च तच्च तेनैव कारयेत् ॥ ५७ ॥

* इति नास्यतैलं रसायनं *

तप्यमानं तपोत्युग्रं विश्वामित्रं महामुनिम् ।
अश्विनौ देवभिषजावूचतुर्व्वरदां वरौ ॥ ५८ ॥
तपश्चरणखिन्नस्य नरस्याप्यायनं पुनः ।
रसायनमिदं श्रेष्टमारोग्यबलवर्धनम् ॥ ५९ ॥

गौरामलकचूर्णानां प्रस्थः स्याच्छिशिरोधृतः ।
एकविंशतिरात्रं तु स्वरसेनैव भावयेत् ॥ ६० ॥

प्रस्थः पिप्पलिचूर्णानां प्रस्थश्चायोरजो भवेत् ।
द्वौ प्रस्थौ मधुनः स्यातां सर्पिषश्चाढकं भवेत् ॥ ६१ ॥

शर्करायाश्च द्वौ प्रस्थावर्धप्रस्थं च चित्रकात् ।
एतत्संभृत्य संभारं प्रक्षिप्य घृतभाजने ॥ ६२ ॥

मासमेतात्स्थितं वान्ये प्राश्नीयात्तु यथाबलम् ।
पलं वा द्विपलं वाथ लिह्यात्कल्यमभुक्तवान् ॥ ६३ ॥

शतं जीवति मेधावी बलि पलित वर्जितः ।
न चात्र नियमः कश्चित् स्नानभोजनमैथुने ॥ ६४ ॥

[धन्यं य]शस्यमायुष्यं कल्याणं मंगलं परम् ।
विश्वामित्रेण चाभिष्टं ऋषिभिश्चाभिपूजितम् ॥ ६५ ॥

* इति आश्विनरसायनम *

हेमंतेथाश्वगन्धां नियतमथ तिलान्कृष्णकान्भक्षयीत ।
संमिश्राः शर्करायाः सततमिह पयः पश्चादनुपिबेत् ॥६६॥

एतच्चैवेश्वरेण स्वयमिह विहितं विष्णोर्बलकरम ।
यत्पीत्वा द्वादशाहं भवति हि पुरुषो वृद्धोऽपि तरुणः ॥६७॥

* इति वृहत्करणं *

अश्वगन्धां पयस्याञ्च संसृज्य पयसा पिबेत् ।
मासमेकं प्रयुंजानः सुकृशः स्थूलतां प्रजेत् (व्रजेत्) ॥६८॥

अथ कृशस्य बृंहणं वक्ष्यामः

निर्मुसलचक्रहलशब्दाभिहतायां भूमौ ।
जातामश्वगंधां समूलपत्रपुष्पां सूक्ष्मचूर्णानि कुर्यात् ॥६९॥
ततः सर्पिषा विडालपदकमाहृत्याहनि लेहयेत् ।
पयश्चानुपिबत् जीर्णांते पयसा भोजनमश्नीयात् ॥ ७० ॥
एवमेकविंशतिरात्रं बलवान्बृहच्छरीरश्च भवत्याह बृहस्पतिरिति॥७१

* इति वार्हस्पत्यं वृहत्करणं *

कोलकुलत्थयवमूलकानां
निर्यूहमेषां घृततैलमिश्रम् ।
दध्नायुतं तण्डुलसैन्धवाभ्यां
जयेज्ज्वरं कोष्ठगतञ्च वायुम् ॥ ७२ ॥

स नागरं पिप्पलीचव्यचित्रकं
सपिप्पलीमूलमथापि तण्डुलान् ।
यवागुरेषालघुशूलनाशनी
प्रदीपनी दीपयते च पावकम् ॥ ७३ ॥

मध्यं कपित्थस्य सविल्वमध्यं
चांगेर्यथो दाडिमतक्रसिद्धा ।
यवाग्वियं ग्राहणी पाचनीया
वातामये स्यात्तु स पञ्चमूला ॥ ७४ ॥

स्यात् शालपर्णी ह्यथ पृश्निपर्णी
　　बला तथा बिल्वफलस्य मध्यं ।
स दाडिमा तण्डुलसंप्रयुक्ता
　　कफेतिसारे कफपित्तजे तु ॥ ७५ ॥

ह्रीवेरधान्यु(न्यो)त्पल नागरेषु
　　छागे पयस्यांभसि पृश्निपर्ण्याः ।
सतण्डुलां तां विपचेद्विधिज्ञो
　　रक्तातिसारेषु हितां यवागूम् ॥ ७६ ॥

आमे तु सांब्ला सह नागरेण
　　पेयांभषक्सार्ति विषाश्च दद्यात् ।
सकण्टकारी तु भवेच्छ्वदंष्ट्रा
　　सफाणिता वस्तिरुजासु पेया ॥ ७७ ॥

विडंग्यथो पिप्पली मूलशिग्रुं
　　सुवर्चिकां मोचरसश्च तद्वत् ।
स्यात्तक्रयुक्ता तु हिता यवागू
　　कोष्ठाश्रयान्हन्ति क्रिमीन् नरस्य ॥ ७८ ॥

मृद्वीकथो [मुस्तकसा]रिवा च
　　लाजाश्वसिद्धा सह पिप्पलीभिः ।
पेया सुशीता मधु संप्रयुक्ता
　　तृष्णां निहन्य[ात् सुचिर ] प्रवृद्धाम् ॥ ७९ ॥

ससोमराजिस्तु(न्तु) हिता यवागूं
　　वदन्ति रोगेषु विषान्वयेषु ।
वराहमेदः क्वथिते तु सिद्धा
　　स्याद्बृंहणीया तु नृणां यवागू ॥ ८० ॥

यवैर्यवागू तु सदाडिमाम्ब्ला
[. . .]णा हिंगुनिचेद्विपक्का ।
घृते सतैले लवणे च युक्ता
जीर्णप्रतिश्याय हिता कफे च ॥ ८१ ॥

गवेधुकानां परितापितानां
स्यात्कर्शनीया मधुसंप्रयुक्ता ।
सार्पिष्मती सैन्धवसंप्रयुक्ता
तिलैर्युता स्नेहयुता यवागू ॥ ८२ ॥

कुशाल(विशाल)पर्ण्याः कथिते कषाये
श्यामाकपेया तु विरुक्षणीया ।
हिश्वासु कासेषु तथैव श्वासे
हिता यवागू दशमूलसिद्धा ॥ ८३ ॥

रुजासु पक्काशयसंभवासु
हिता प्रसन्नायमके विपक्का ।
मांसैश्च माषैश्च तिलैः सशाकैः
सिद्धा भवेद्वर्चनिरस्यनी तु ॥ ८४ ॥

जंब्वाम्रमस्थीककपित्थविल्वैः
संग्राहणी या तु भवेद्यवागू ।
क्षारश्च हिंगून्यथ चित्रकं च
वृक्षाम्ब्लासिद्धान्यथ भेदनीया ॥ ८५ ॥

वातानुलोमं कुरुते यवागू
स पिप्पलीमूलभया स विल्वः ।
तक्केणयुक्ता तु हिता यवागू
तक्रानुपाना घृतव्यापदेषु ॥ ८६ ॥

व्यापन्नतैलस्य हिता यवागू
उदश्विपिण्याकयुता सक्षौद्रा ।
सपिप्पलीकामलकैर्व्विपक्का
कण्ठ्या यवागूर्यमकोपसिद्धा ॥ ८७ ॥

दध्ना तु पक्का तुरुपोवकास्यात्
स तण्डुलास्यान्मदनाशनीतु ।
गोधास्वपामार्ग्गरसेन चैव
सिद्धा यवागू तु भवेत्क्षुतघ्नी ॥ ८८ ॥

स पञ्चमूला धृततैलमिश्रा
सदाडिमा वातहरा यवागू ।
श्लेष्मामयघ्नी तु पुराणधान्या ॥ ८८ ॥ क ॥
सपद्मनीलोत्पलशर्क्करा स्यात्
सिद्धं पिबेत्पित्तहरा यवागू ॥ ८९ ॥

अग्निर्म्मेमाध्यगाद्देहाद्वायुः प्राणान्दधातु मे ।
इन्द्रो मे बलमादद्याच्छिवं चापोदिशन्तु मे ॥ ९० ॥

इत्येनं मंत्रमार्षं वै भुक्त्वा गत्वा तथा स्त्रियः ।
जपमानः स्पृशेदापस्तथा स्यायुर्न्न हीयते ॥ ९१ ॥

* इति भेली यवागू *

अम्[ब]ष[ट]की सकुडुजाफलशृंगवेर-
माम्रास्थिकट्फलजंबूसारम् ।
स्याद्धातकी सहिरि(हृ)वेर शिलोद्भिदे च
वारिष्ठमुस्तमपि चोत्पलकेसरं स्यात् ॥ ९२ ॥
एतानतुल्यधरणानि तुलाधृतानि
बध्वा[ ि]प मूटकमथापि नत्त(र्त्त)केस्मिन् ।

प्रक्षाल्य सिद्ध चि . . प्र . . . .
यवागुंश . . . . . . . . . . . . . || ९३ ||
. . . . . . . . . . मूलकानां
दधिघृततैल तथैव तण्डुलानाम् ।
परिमितामपि चेत्पिवेद्यवागूं
शमयति कोष्ठगतांश्चरांश्च वायू[न] || ९४ ||
अजात्य वा कुंचिक शृंगवेरं
सचित्रकं [कारकवेल]भागम् ।
धृतेन भृष्टा लवणांश(ष)युक्ता
कल्याणिकानाम यवागुरग्र्या || ९५ ||
हतांतु दीप्तां ग्रहणी करोति
शमेति पित्तं कफमारुतौ च ।
अर्शांसि व(ि)र्त्तं कुरुते प्लिहश्च
निहन्ति गुल्मांश्च हलीमकश्च || ९६ ||
(क) शतपुष्पां षडीं विल्वं पुष्करं चित्रकं वचाम् ।
(ख) विडं सौवर्चलं चैव शृंगवेरं सपिप्पलीम् || ९७ ||
(ग) पलांशकं च लवणं दाडिमं तुंबुरुणि च ।
कुस्तुंबुरुमजाजीश्च समभागानि कारयेत् || ९८ ||
तण्डुलान्यमके भृष्टान् यवागूं साधयेद्भिषक् ।
योनिशूलमुदावर्त्तं मूत्रकृच्छ्रश्च साधयेत् || ९९ ||
यावंतो वातिका रोगाः सर्व्वानेतान्नियच्छति ।
एषा यवागुराख्याता अश्विना भिषजां वरौ || १०० ||

* इति आश्विनीयं यवागूत्त्रयम् *

## ❁ इति यवागू कल्पः ❁

* इति नावनीतके सिद्धसङ्क्षेपे सप्तमोऽध्यायः समाप्तः *

## [अष्टमोऽध्यायः]

इक्षुरसानि विदार्यामलकघृतपयो माषमांसमधूनां समधुकानाम् ।
प्रस्थाः पृथग्विधेया रसस्तुमांससमं तुलितं च ॥ १ ॥
मधुकपलान्यपि पंचप्रस्थो माषस्य लुचितस्य ।
एतत् सरास्वतिघृतं राजेंषः पुत्रकामस्य ॥ २ ॥
आमलकरसप्रस्थः प्रस्थः इक्षुरसस्य च ।
प्रस्थमाजस्य दुग्धस्य पयसः प्रस्थमेव च ॥ ३ ॥
विदारीणां रसप्रस्थं घृतप्रस्थश्च साधयेत् ।
शीते दद्यान्मधुप्रस्थं पञ्चविंशच्च शर्करा ॥ ४ ॥
मरिचं पिप्पलीञ्चैव कुडवौधौतचूर्णितौ ।
जीवनीयञ्च बल्यञ्च वृष्यं चैव तदुत्तमम् ॥ ५ ॥
घृतं शतावरीगर्भं क्षी[रे दशगुणे पचेत्] ।
शर्करापिप्पली क्षौद्रं युक्तं तद्वृष्यमुत्तमम् ॥ ६ ॥
रसं गोक्षुरकात्सर्पिः द्वे च दुग्धे गवाजयोः ।
प्रसृतं मधुसंयुक्तं योगो विंशति वेगिकः ॥ ७ ॥
विदारी चात्मगुप्ता च तथामलकमेव च ।
यवाश(स) सह [. . .] पेष्टव्याः पयस[ा सह] ॥ ८ ॥
[. . . त]द्घृतेभृष्टशतकृत्वा मघूक्षितम् ।
भक्ष[ि]यत्वा नरः क्ष[ी]णः पुन[र्वृष्टां वृजेत्] ॥ ९ ॥
[. . . . . . . . . . . . . . . . . . . . . .] ।
सपञ्चशर्करं चूर्णं तथैव मधुसर्पिषी ॥ १० ॥
अतोक्षमात्रां प्राश्नीयात्पुमान्यस्यांगनाशनम् ।
अनंब्लकटुकाहारो निहीनं वर्जयेद्द(घृ)तम् ॥ ११ ॥
जलाढकेत्मगुप्तायाः पञ्चमूलपलानि तु ।
क्वाथे तस्मिन्पयोध्यर्द्धं कृत्वा चूर्णानि दापयेत् ॥ १२ ॥

शर्कराया भवेत्प्रस्थः प्रस्थं स्यान्मधुसर्पिषोः ।
गोधूमचूर्णैर्बध्नीयान्मोदकं पलसंमितम् ॥ १३ ॥
अतएकं नरः प्राश्य षष्टिं गच्छति मैथुनम् ।
पुरुषः कामिनीकांतः परमं वृष्यमुच्यते ॥ १४ ॥
रसेन चटकानाञ्च निश्चित्रान्निर्मलांस्तिलान् ।
भावितान्यावतः प्राशेत्तावत् गच्छति मैथुनम् ॥ १५ ॥
क्षीरपक्कास्तु गो[धू]माः स्वयंगुप्ताफलानि च ।
शीतं मधुघृताक्तश्च प्राश्य गृष्टयाः पयः पिबेत् ॥ १६ ॥
प्रयोगादस्य गच्छेत् वृषत्वं पक्षमक्षतः ।
श्वदंष्ट्राकाथदुग्धाभ्यां धौतान्मषान्विपाचयेत् ॥ १७ ॥
बिल्वमात्रं ततः पिण्डं भक्षयेन्मधुसार्पिषा ।
ततश्चानुपिवेत्सायं शर्करासहितं पयः ॥ १८ ॥
एकाह्वागन्तुमिच्छेद्यः पुरुषः प्रमदाशतम् ।
विदारीपयसा भृष्टा सार्पिषा मधुना सह ॥ १९ ॥
प्राश्य शीतं यथाकामं षष्टिं गच्छति मैथुनम् ।
विदारीणां भवेच्चूर्णं तद्रसेनैव भावितम् ॥ २० ॥
मधुसर्पिस्समायुक्तं प्राश्य स्याद्दशवेगिकः ।
तथामलक चूर्णानि भावितानि तु तद्रसे ॥ २१ ॥
घृतमाक्षीकं संयुक्तं प्राश्य स्याच्छतवेगिकः ॥ २१ ॥
तथाश्वगंधामूलानि शुंगानि च फलानि च ।
दिवाक्षीरेण् पीतानि रात्रिं कुर्व्वन्ति विंशिकाम् ॥ २२ ॥
अभ्यण्डा चटकाः सर्पिः स्वयंगुप्ता फलानि च ।
पादलेपः प्रयोक्तव्यो वृषो यावन्नगां स्पृशेत् ॥ २३ ॥
निष्पत्रञ्चटकं कृत्वा डेम्बुकाभिर्द्दशापयेत् ।
धृतं तेन विपक्कंतु पादलेपः प्रशस्यते ॥ २४ ॥

विदारीमाषचूर्णानि तथा लोहितशालयः ।
वराहमेदः संयुक्तं चटकाण्डरसे [तथा] ॥ २५ ॥
युक्ता च लवणं देयं घृते शष्कुलिकां पचेत् ।
ततः पाणित[लं] प्राश्य गच्छे[छ]त् प्रमदाश[तम्] ॥ २६ ॥
[. . . . . . . .] ध [. . . .] त मधु स[ि]पषा ।
दुग्धानुप[ा]नं ग्र[ी]ष्मे च दशगच्छे[च्च मैथुनम्] ॥२७॥
. . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . विसग्रन्थिरसाष्टमः ॥ २८ ॥
आजेन पयसा पिष्ट्वा घृते शष्कुलिकां पचेत् ।
अंगुष्ठपर्वमात्रेण वेगार्द्ध . . . . . ॥ २९ ॥
. . . . . . . . . . . . . . . . . . . ।
अनुपीत्वा सुरामण्डं नरस्तेन वृषायति ॥ ३० ॥
तप(तृप्तः)कुक्कुटमांसानां गत्वा योनुपिवेत्पयः ।
न तस्य लिंगशैथिल्यं न च शुक्र[क्षयोभवेत्] ॥ ३१ ॥
यो माषयूष्णाभुक्त्वातु घृताढ्यं षष्टिकोदनम् ।
पयः पिवेतरात्रिंयः कृत्स्नां जागर्त्ति वेगवान् ॥ ३२ ॥
शर्करामधुदुग्धश्च घृतं त्रिकटुकं सरः ।
शृतमेकध्यमेतद्धि पिवेदिन्द्रप्रियं पयः ॥ ३३ ॥

* इति औशनसोयोगः इन्द्रप्रियः *

❀ इति नावनीतकं सिद्धसंकर्षे नानाचार्यमते
वृषयोगाः समाप्ताः ❀

## [नवमोऽध्यायः]

शंखस्य भागाश्चत्वारस्ततोर्धेन मनःशिला ।
मनःशिलार्धे मरिचं मरिचार्धे च सैन्धवम् ॥ १ ॥
एषावैदेहिका वर्त्तिः बर्द्धत्ति नाशयेद्रदान् ।
आल्कनं [पतल]ˈ [का]चं मलं लोहितराजिताम् ॥ २ ॥
शंखं पीषेद्गवांक्षीरे अजक्षीरे मनःशिलाम् ।
अवीक्षीरे च मरिचं मानुषेण च सैन्धवम् ॥ ३ ॥
एकमारिचा द्विकतका त्रिशर्करा [चतु]समुद्रफेनयुता ।
पुष्पांजनपश्चयुता वर्त्तिः सर्वाक्षिरोगेषु ॥ ४ ॥
शर्करा गैरिकक्षौद्रं पुष्पांजनमथापि च ।
एषा रसक्रिया मुख्या सर्व्वनेत्ररुजापहा ॥ ५ ॥
दध्ना लवणमिश्रेण मृघ्नी(द्री)यात् पात्रमायसम् ।
शूलार्त्तमञ्जयेन्नेत्रमाशु स्वस्थं भविष्यति ॥ ६ ॥
सैन्धवं वृहती ताम्रं कटुकां शंखपिप्पलीम् ।
शुष्काक्षिरोगं शुक्रश्च हन्ति पैल्य(पिल्व)श्च कोकिला(म्)॥७॥
पिप्पलीभिर्हरिद्राभिर्मृद्नीयाद्दर्पणं मुहुः ।
शूलार्त्तमञ्जयेन्नेत्रमाशु स्वस्थं भविष्यति ॥ ८ ॥
चीडायाः स[ने]हवत्काष्ठं सूक्ष्मचूर्णानि कारयेत् ।
तच्चूर्णं वस्तमूत्रेण त्रिरात्रं परिभावयेत् ॥ ९ ॥
एतच्चूर्णाज(ञ्ज)नं श्रेष्ठं पैल्यक्रिमिविनाशनम् ।
कुङ्कुमरसेन तिमिरं निहन्ति शुष्काक्षिरोगमुदकेन ॥ १० ॥
आसन्नानि च मधुना सद्योत्पातितानि पयसा च ।
[. . . . . . . . .] तिमिरस्य च नाशनम् ॥११॥
कृष्णसर्प्पस्यमेदः स्याद्धात्रीफलरसस्तथा ।

एताभ्यां क्षौद्रयुक्त[ा]भ्यां त्र्यहादन्धः प्रपश्यति ॥ १२ ॥
उशीरं तगरं [चै]व सैन्धवं परिपेलवम् ।
त्वचं च गैरिकश्चैव पिष्टानि स्युर्व्विडालकम् ॥ १३ ॥
मनोह्वा सह तैलेन छागक्षीरेण चाञ्जनम् ॥ १४ ॥
गैरिकं वस्तमूत्रेण वृषमूत्रेण पिप्पलीम् ।
समभागानि पिष्टानि ततो वर्त्तिं प्रकल्पयेत् ॥ १५ ॥
एषापिल्लेषु योक्तव्या यस्य चास्रु न तिष्ठति ॥ १६ ॥
मनः शिलामञ्जनं च श्वेतानि मारिचानि च ।
सर्व्वाण्येकप्रमाणानि चूर्णं तिमिरनाशनम् ॥ १७ ॥
त्रिफलां सहरिद्रां समांशान्सलिले पचेत् ।
सारसे क्षीरसंसृष्टे ससेको वेदनापहः ॥ १८ ॥
इमं योगोत्तमं सिद्धं प्रयुञ्जीन्मतिमान्भिषक् ।
सर्व्वेषु नेत्ररोगेषु शूलवत्सु विशेषतः ॥ १९ ॥
पुनर्न्नवायाः पत्राणि वृ(बृ)हतीं कण्टकारिकाम् ।
श्वदंष्ट्रां वर्द्धमानं च क्षीरेणाजेन क्वाथयेत् ॥ २० ॥
एतदाश्च्योतनं श्रेष्ठं पयोमधुसुखोदकैः ।
ताम्रपात्रे घृताऽभ्यक्तं छागशृंगेन धूपितम् ॥ २१ ॥
नारीक्षीरेण मृदितं शूलघ्नं परिषेचनम् ।
प्रपौण्डरीकं मधुकं शैलेयं क्षौद्रमेव च ॥ २२ ॥
यथावज्जर्जरीकृत्वा बध्नीयान्नात्तके शुचौ ।
जलेन बहुशः सिक्तं पीडितं च मुहुर्मुहुः ॥ २३ ॥
आश्च्योतनमुदारं स्यान्नेत्रयोर्भृशशूलयोः ॥ २४ ॥
द्वयोर्व्वृ(बृ)हत्योः मलत्वक्पिप्पली विश्वभेषजम् ।
सैन्धवं ताम्रसंयुक्तं क्षीरेण सह पी(पे)षयेत् ॥ २५ ॥

श्लक्ष्णपिष्टान्तु तां कृत्वा लेपयेत्ताम्रभाजनम् ।
सप्तरात्रमथाष्टाहं पिष्ट्वा पिष्ट्वा प्रलेपयेत् ॥ २६ ॥

अञ्जनीत ततश्चक्षुर्व्वेदनार्त्तनि[ब]ं[हणम्] ।
श्वयथुं ताम्रराजिश्च प्रसह्य विनिवर्तयेत् ॥ २७ ॥

आलूनं पटलं काचं तिमिरं चापकर्षति ।
रसाञ्जनस्य ध[ . . मन]ःशिला [ . . . . ] ॥ २८ ॥

[ . . . . . . . . ] कुशमूलं च दापयेत् ।
क्षौद्रयुक्तं भवेदेतत्स्रावकण्डूविनाशनम् ॥ २६ ॥

आलूनं तिमिरं चैव सर्व[ाक्षिरोगनाशनम्] ।
[ . . . . . . . . . . . . . ] च षोडश ॥ ३० ॥

मधुयष्टिका शर्करा च वर्त्तिः सद्योत्थितेक्षिणि ॥ ३० क ॥
सौवर्च्चलं हरिद्रे द्वे त्रिफला कटुकत्रिकम् ॥ ३१ ॥
मधुकेन समायुक्त[ं] श्रेष्ठ[ं] [ि]तमिरनाशनम् ॥ ३२ ॥
जा[ि]त श [ं][ख] [मनः]शिला समधुका फेनं समुद्रात्तथा ।
मंजिष्ठामरिचांजनं समधृतं प्राचीनिका पिप्पली ॥ ३३ ॥
दद्याच्चैव समांशिका द्विगुणितं यत्तच्छुभं गैरिकम् ।
सर्व्वव्याधिविनाशनी हिततमावर्त्तिः स्मृताक्ष्यामये ॥३४॥

* इति प्राचीनिका पाठा *

प्रपौण्डरीकं मधुकं शर्करा समनःशिला ।
शंखं पिप्पलीवी(बी)जानि रसाञ्जनमथाञ्जनम् ॥ ३५ ॥
रीतीपुष्पं फलं चैव कतकस्य ससैन्धवम् ।
समुद्रफेनं मरिचं समभागानि माक्षिकम् ॥ ३६ ॥
छायासुशुष्का गुडिकाः सुनिगुप्ता निधापयेत् ।
पिल्लानां रोमजननी वर्त्तिः सर्व्वाक्षिरोगिणाम् ॥ ३७ ॥

स्रोतोञ्जनस्य भागो भागश्च भवेत्समुद्रफेनस्य ।
श्वेतमरिचस्य भागो भागोप्यथ पिप्पलीनां च ॥ ३८ ॥
लवणाक्षभागयुक्तं निमिना परमार्च्चितं हितमुदारम् ।
तिमिरापहं सुसूक्ष्मं चूर्णं स्यादार्यजनयोग्यम् ॥ ३९ ॥
गैरिकं शर्करा चैव पुष्पांजनमथापि च ।
मधुना संप्रयुक्तैषा नेत्रामयरसक्रिया ॥ ४० ॥
अभयायास्त्रयो भागा भागः स्याद्विश्वभेषजात् ।
वर्त्तिरप्सुमि(त्व)यंपिष्टा सर्व्वनेत्रामये हिता ॥ ४१ ॥
सितमरिचसमुद्रफेनं सिताशर्करां शंखनाभीरजस्ताम्रजः ।
कतकफलमयोरजो गर्मुडीमूलमेलां तथा सैन्धवम् ॥ ४२ ॥
[अ]पि च कटुकरोहिणी पिप्पलीनांकणाः पिष्यवर्त्यभसाकारयेत् ।
तिमिरपटलकण्डुकाचापहा रात्रिमन्धापहा वर्त्तिरेषा शिवा ॥ ४३ ॥
[अगु]रुं चन्दनं पत्रं कुङ्कुमं च सकेसरम् ।
वृ(बृ)हती श्वेतमरिचं भद्रमुस्तामथोत्पलम् ॥ ४४ ॥
एतानि समभागानि नारीक्षीरेण पी(पे)षयेत् ।
नारी[क्षीरस्याल]ाभे तु छागीक्षीरेण पी(पे)षयेत् ॥ ४५ ॥
कण्डूतिमिरमास्रावं तथा लोहितराजयः ।
नक्तमन्धं तथैवान्यान्नेत्ररोगान्नियच[(च्छ)]ति ॥ ४६ ॥

❀ [ इति नवमोऽध्यायः समाप्तः ] ❀



# [ दशमोऽध्यायः ]

[ . . . कर]व[ ा]रक[ ं] तिलतैलेन पाचयेत् ।
ना(न)स्याभ्यञ्जनयोगोय[ ं] सिद्धः पलितनाशनः ॥ १ ॥
प्र[पु]ण्ड[रीक . . . . . . . . . . . . . । ]
. . . . . . . . . . . . . . . . . . . ॥ २ ॥
[. . . . .] [ि ]पष्टोयं लेपः पलितनाशनः ।
रोचना काचमाची च शतष्पातिलास्तथा ॥ ३ ॥
अनेन म्रक्षिताः केशा भवंत्यञ्जनसन्निभाः ॥ ४ ॥
नीलीका सैं[न्धवं] च[ ै]व जलपिष्टा च पिप्पली ।
अनेन मृक्षिताः केशा भवंत्यञ्जनसान्निभाः ॥ ५ ॥
अभयामलकाभ्याञ्च पूर्व्वं प्रक्ष[ा]लयेच्छिरः ।
अलंबुकञ्च संगृह्य पीषेन्नीलिकया सह ॥ ६ ॥
तेनोष्णेन शिरो लिंपेत्पालितं न भविष्यति ॥ ७ ॥
तुत्थमुस्तं सकासीसं कुर्म्मपित्तमयोरजः ।
दंती च सहदेवा च भागो भृंगरजस्य च ॥ ८ ॥
विभीतकानां तैलेन सिद्धं पलितनाशनम् ।
अभ्यंगं सततं कुर्य्यात् पलितं न भविष्यति ॥ ९ ॥
भृंगर(ा)जरसप्रस्थं तद्वत्पयसः पलं च मधुकस्य ।
तैलकुडवे विपक्वं कुर्यात् कृष्णामपि बलाकाम् ॥ १० ॥
नाशयति वलिपलितं द्वादशवर्षाणि सप्तरात्रेण ।
मासेन च वर्षशतं नस्तः कर्म्मप्रयोगेण ॥ ११ ॥
रामतरुण्या द्वे मूलपले पलं च मधुकस्य ।
शाब(व)रकस्यार्धपलन्दश च पलानक्षतैलस्य ॥१२॥

आदित्येन विपक्वं पात्रे कार्ष्णायसे दशाहानि ।
कुर्यान्नस्तःकर्म भ्रमरसवर्णानि पलितानि ॥ १३ ॥
आमलकरसप्रस्थः सर्पिः प्रस्थः पलं च मधुकस्य ।
संभृत्य सर्व्वमेतद्वैद्यो मृद्वाग्निना विपचेत् ॥ १४ ॥
अन्धमनन्धं कुर्यात्पलितमपलितं तथैव दृढदन्तम् ।
एतन्नस्तः करणं गतामपि निवर्त्तयति दृष्टिम् ॥ १५ ॥
त्रिफलां च समां कुर्यान्नीलीं नीलोत्पलानि च ।
अक्षमात्रान्पृथग्भागान्फलं पिण्डारकस्य च ॥ १६ ॥
अञ्जनं पिप्पलीमूलं पत्रं सहचरस्य च ।
जंबूकषायः कर्त्तव्यः जंबम(बूमू)लाच्च मृ[त्तिकाम्] ॥ १७ ॥
ककुभस्य फलं कुर्यात् द्वौ तैलकुडवौ तथा ।
एतद्वैभीतक(के)त(तै)ले शनैर्मृद्वाग्निना पचेत् ॥ १८ ॥
म[. . .] सराहा[नि]नस्तः कर्म्मस[माच]रेत् ।
ततः ष(ा)डशमे ह्यह्नि न श्वेतः कृष्णमूर्धजः ॥ १९ ॥
सुवक्तनयनः श्रीमान्भवेन्नीलशिरोरुहः ।
इत्युवाचेह भगवान् अगस्त्यो वदतां वरः ॥ २० ॥
त्रिफलासहचरकुसुमं जंबू काष्मर्यककुभकुसुमञ्च ।
चूतफलस्य च मध्यं तथैव पिण्डारकफलञ्च ॥ २१ ॥
कासीसमसनकुसुमं नीली नीलोत्पलं विसग्रन्थी ।
अञ्जनमञ्जनवर्णश्च कर्दमो लोहचूर्णश्च ॥ २२ ॥
द्वे कण्टकारिके द्वे च शारिवे दापयेच्च मदयंतीम् ।
भृंगर(ा)जरसं चाथो तथैव वैभीतकं तैलम् ॥ २३ ॥
असनकषायालुडितं पात्रे कार्ष्णायसे दशाहानि ।
स्थितमेतदानिमे दग्धं सम्यङ्मृद्वग्निना विपचेत् ॥ २४ ॥

मुद्गेष्वथ माषेषु च सुक्तं स्थाप्यमर्द्धमादा[प्य] ।
पूर्णे ततोर्धमासे कृतरक्षन्तत्प्रयोक्तव्यम् ॥ २५ ॥
त्रिफलाभावितकायः कृसराशी शुक्तिमस्य तैलस्य ।
एकान्तरं सुनियतः सुनिवाते नस्ततो दद्यात् ॥ २६ ॥
तैलप्रस्थं त्वेतद्यः सम्यङ्नामयेत नासिकया ।
उपयुक्ते श्वेतशिरा सकृष्णकेशः पुनर्भवति ॥ २७ ॥

* इति केशरागाः *

* [ इति दशमोऽध्यायः समाप्तः ] *



## [ एकादशोऽध्यायः ]

अथातो हरीतकीकल्पं व्याख्यास्यामः

सुखोपविष्टं ब्रह्माणमश्विनौ वाक्यमूचतुः ।
कुतो हरीतकी जाता कति योनिश्च कीर्त्यते ॥ १ ॥
रसाश्च कतिसंख्याताः कतिचोपरसाः स्मृताः ।
कतिनामानि वर्णावा नाम्नि नाम्नि च लक्षणम् ॥ २ ॥
कांश्च रोगाञ्छमयते वर्णरूपाणि कानि च ।
केन द्रव्येण संयुक्ता कान्रोगान्सन्नियच्छति ॥ ३ ॥
[ए]तं प्रश्नं यथापृष्टं भगवन्वक्तुमर्हसि ।
अश्विनोर्व्वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ४ ॥
भवद्भ्यां यदिदं पृष्टमस्य व्याकरणं पृथक् ।
प्रवक्ष्याम्यनुपूर्व्वेण बुद्धिरूपकरं [परम्] ॥ ५ ॥
पपात विन्दुर्म्मेदिन्यां शुक्रस्य पिबतोमृतम् ।
औषधीनां ततः श्रेष्ठा प्रादुर्भूता हरीतकी ॥ ६ ॥
विजया त्रिवृता चैव रोहिणी पूतनामृता ।
[जीवन्तीचा]भया चैव सप्तयोनिर्हरीतकी ॥ ७ ॥
अलाबुवृत्ता विजया या वृत्ता सा तु रोहिणी ।
पूतनास्थिमयी(ति) सूक्ष्मा स्थूलमांसफलामृता ॥ ८ ॥
सुवर्णवर्णा जीवन्ती पञ्चाश्री त्रिवृत्ता [तथा] ।
अभया कालिका लोके निर्दिष्टा ब्रह्मणा पुरा ॥ ९ ॥
एतासां संप्रवक्ष्यामि रसवीर्य्यं समासतः ।
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ॥ १० ॥
गुणोलवणवर्ज्जो यः [ह]र[ी]तक्या निरत्ययः ।
निर्हरन्ति मलं यस्मादारोग्यायुष्यसंमताः ॥ ११ ॥

शिवाक्षि प्रसमुत्था च स्वपचारा सदाभया ।
सुखापुष्टिकरी चैव दरिद्राणां चिकित्सति ॥ १२ ॥

तथैव सुकुमाराणाम् प्र(ा)य(ः)क्लेशा श्चये नरः ।
अभया हि नृणां धन्या चिकित्सार्थे सदा हिता ॥ १३ ॥

ससैन्धवां तु यः खादेदभयां समहौषधम् ।
व्यत्यासेन च पिप्पल्यो न व्याधिर्व्विषहेत तम् ॥ १४ ॥

गुडमिश्रद्वितीयां तु द्वे द्वे खादेत(द्ध)[रीतकी] ।
सहस्रं स समाः प्राप्य नरः सर्व्वामयाञ्जयेत् ॥ १५ ॥

अभयां सह मुद्गैर्व्वा भुंजानो लघुभोजनम् ।
संवत्सरशतं जीवेत्प्रणुद्य विविधान्गदान् ॥ १६ ॥

अरोगो बलसंपन्नो बलीपलितवर्ज्जितः ।
ओजस्करी शरीरे च भवेत् नित्यं निषेविता ॥ १७ ॥

अभयाञ्च हरिद्राञ्च पिप्पल्यः सैन्धवन्तथा ।
कुष्ठं चेति समायुक्तं गोमूत्रेण विरेचनम् ॥ १८ ॥
गुडं द्राक्षारसं क्षौद्रं तथैव च हरीतकी ।
एतत्काङ्कायनप्रोक्तं पैतिकानां विरेचनम् ॥ १९ ॥
पिप्पल्यः सैन्धवं चैव बि(वि)डंगानि हरीतकी ।
एतद्गोमूत्रसंयुक्तं सहरिद्रं विरेचनम् ॥ २० ॥
हरीतकीं समगुडां मधुना सह संयुताम् ।
युक्तो[ि]वरेचनो योगः सिद्धं स्याच्च रसायनम् ॥ २१ ॥
सर्व्वरोगान्निहन्त्येषा पूर्व्वोक्ता[न्] हि हरीतकी ।
व्याख्यातं तत्समासेन विस्तरेणापिमेश्रृणु ॥ २२ ॥
विषमं च सुराणाञ्च विषं हन्याद्धरीतकी ।
पावकं वर्द्धयत्येषा गुल्मं चाशु नियच्छति ॥ २३ ॥

हरीतकीप्रयोगस्तु जठरान्यपि नाशयेत् ।
आयुष्या साधयत्येषा कफद्वाराणि शोषिणाम् ॥ २४ ॥
कासं श्वासश्च हिक्कां च तमो मूर्च्छां प्रतानकम् ।
अभयां नातिवर्त्तंते चमूमैन्द्रीमिवासुराः ॥ २५ ॥
कामलां चैव क(कु)ष्ठञ्च नाशयेत हरीतकी ।
अर्शसां शमनी चैव सर्वमेहविनाशनी ॥ २६ ॥
हरीतकीप्रयोगात् च श्वयथुप्रविदीर्यते ।
उद्धता मारुतेनैव तोयमु[क्तप्रवा]हिकाः ॥ २७ ॥
श्लेष्मपित्तं रक्तपित्तं पाण्डुरोगं हल[ी]मकम् ।
अभया [.......... व्याध]यस्तथा ॥ २८ ॥
श्लेष्मप्रसेकं वैवर्ण्यं स्वरभेदमरोचकम् ।
हृद्रोगं चैव मूर्च्छाञ्च हन्याद्ध्येषा हरीतकी ॥ २९ ॥
यथा वैश्वानरो युक्तो बलवान्वायुना भवेत् ।
तथा वीर्य्यसमापन्ना गुडेन स्याद्धरीतकी ॥ ३० ॥
तत्र श्लोकाः -
यथा कथंचिद्गुडमिश्रितैषा पीता भिषग्वाप्यथवापि लीढा ।
दुरासदांश्चैव चिरास्थितांश्च गदान्नराणामगदान्करोति ॥३१॥
न सोऽस्ति रोगो भुवि मानवानां हरीतकी यं न जयेत्प्रसह्य ।
यशस्विनीन्ताममृतप्रसूतां प्रयोजयेत्सर्व्वत एव धीरः ॥३२
हितं हयानां लवणं प्रशस्तं जलं गजानां ज्वलनं गवाश्च ।
हरीतकी श्रेष्टतमा नराणां चिकिसिते पङ्कजयोनिराह ॥३३॥

## * इति हरीतकी कल्पः आश्विनः *



## [ द्वादशोऽध्यायः ]

**अथातः शिलाजतुकल्पं व्याख्यास्यामः :—**

नात्युष्णश्च कषायश्च कटुः पाके शिलाजतुः ।
नात्युष्णशीतो धातुभ्यश्चतुर्भ्यस्तस्य निर्दिशेत् ॥ १ ॥
हेमातारा: सरजता ततः कृष्णायसादपि ।
रसायनं सविधिभिः सवृष्यः स च रोगनुत् ॥ २ ॥
वातपित्तकफघ्नस्तु निर्यूहै स सुभावितः ।
वीर्योत्कर्षं परं याति सर्व्वैरेकैकशोपि वा ॥ ३ ॥
प्रक्षिप्तोद्धृतमाधानं ततस्तं प्रक्षिपेद्रसे ।
ऊष्णे सप्ताहमेतेन विधिना तस्य भावना ॥ ४ ॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैस्सह ।
स पीतः पयसा दद्याद्दीर्घमायुः सुखान्वितम् ॥ ५ ॥
जरानु व्याधिशमनो देहदार्ढ्य करः [प]रम् ।
मेधास्मृति करो बल्यः क्षीराशीतं प्रयोजयेत् ॥ ६ ॥
प्रयोगः सप्त सप्ताहं त्र्यहश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परोमध्योवरस्तथा ॥ ७ ॥
मात्रा पलश्चा[र्धप]लं कन्यसीश्चार्धकार्षिकीम् ।
जातिविशेषं सविधं तस्य वक्ष्याम्यतः परम् ॥ ८ ॥
हेमाद्याः सूर्यसंतप्ताः स्वमलं गिरिधातवः ।
स्निग्धाभं गुरुमृत्स्नाच्छं वमन्ति [तच्छिलाजतु] ॥ ९ ॥
[मधुरश्च सतिक्त]श्च जपापुष्पनिभश्च यः ।
विपाके कटुशीतश्च स सुवर्णस्य निस्रवः ॥ १० ॥
ताम्रोर्वर्हणकण्टाभस्त [ी]क्ष्ण[ ोष्णः पच्यते कटु] ।
रजतः कटुकः श्वेता सिता स्वादुर्विपच्यते ॥ ११ ॥

[वि]प[ा]के कटुशीतश्च सर्व्वे श्रेष्ठः स चायसः ।
गोमूत्रगन्धः सर्वेषां सर्व्वे य(यु)ज्यन्ति कर्म्मणि ॥१२॥
रसायनप्रयोगेषु पश्चिमस्तु वि[शिष्यते] ।
[यथाक्रम्मं वातपित्ते श्लेष्म]पित्ते कफे त्रिषु ।
विशेषतः प्रशंसन्ति मलो हेममलादयः ॥ १३ ॥
शिलाजतुप्रयोगेषु विदाहीनि गुरुणि च ।
वर्ज्जयेत् सर्व्वका[लं तु कुलत्थान् परिवर्जयेत्] ॥ १४ ॥
पयांसि शुक्तानि रसाः सयूषाः
तोये समूत्रं विविधाः कषायाः ।
आलोडनार्थं गिरिजस्य सिद्धाः
एते प्रदेहाः प्रसमीक्ष्य कार्याः ॥ १५ ॥
न सो[ऽस्ति रोगो]भुवि साध्यरूपः
शिलाजतु यं न जयेत् प्रसह्य ।
तस्मात्प्रयोगै[र्विवधै]ः प्रयुक्तः
स्वस्थस्य चोर्ज्जां विविधां ददाति ॥ १६ ॥

## * [ इति शिलाजतुकल्पः ] *



# [ त्रयोदशोऽध्यायः ]

अथातश्चित्रककल्पं व्याख्यामः :—
धान्वन्तरिं महाप्राज्ञं केशवः पर्यप(पृ)च्छत ।
अस्त्यौषधं किञ्चिदेवं सर्व्वव्याधिनिबर्हणम् ॥ १ ॥
केशवस्य वचः श्रुत्वा धन्वन्तरिरभाषत ।
चित्रकात्सादृशं किञ्चिन्नास्त्यौषधमिहोच्यते ॥ २ ॥
त्रिविधः स च विज्ञेयः कृष्णः श्वेतोथ[रक्त]कः ।
प्रवरावरमध्यत्वमानुपूर्व्या विनिर्द्दिशेत् ॥ ३ ॥
त्वग्दोषिणां प्रमेहीनां(णां) तथैवोदरिणामपि ।
कृष्णं हितं विजानीयाच्छ्वित्रिणां च विशेषतः ॥ ४ ॥
ग्रहण्यर्शोविकारघ्नमतीसारविनाशनम् ।
वयसः स्थापनं मेध्यं श्वेतपुष्पं विनिर्द्दिशेत् ॥ ५ ॥
मेधातेजोग्निजननः कफहा पीतकः स्मृतः ।
वातपित्तकफघ्नस्तु निर्द्दिशेदनुपूर्व्वशः ॥ ६ ॥
समादाय यथालाभं सर्व्वानेवोपयोजयेत् ।
कार्त्तिके मार्ग्गशीर्षे वा आषाढेवाप्यथोद्धरेत् ॥ ७ ॥
कार्त्ति[के तू]द[ध]रेत्कृष्णं मागर्गशीर्षे तु श्वेतकम् ।
आषाढे पीतकं चापि स कालस्तस्य संग्रहे ॥ ८ ॥
देवान्संपूज्य विधिवद्ब्राह्मणान् स्वस्तिवाच्य च ।
*श्मशानोषरवल्मीक चैत्यञ्चा[थ] विवर्जिते १ ॥ ९ ॥



*About thirty five verses are wanting including the end of the thirteenth & beginning of the fourteenth Chapter.

## [ चतदुर्शोऽध्यायः ]

[मुहु]स्तु गुडिकामेकां कुमाराय प्रदापयेत् ।
अतिसारेषु बालानां गुडिकां दापयेद्भिषेक् ॥ १ ॥
तंडुलोदकसंयुक्त क्षौद्रेण सह दापयेत् ।
परुषकरसैर्युक्तां शर्कराक्षौद्रसंयुताम् ॥ २ ॥
छर्द्दयानस्य बालस्य गुडिकां दापयेद्भिषक् ।
गुडूचिरससंयुक्तां शर्कराक्षौद्रसंयुताम् ॥ ३ ॥
अथवा पक्कलोष्ठस्य प्रसादेन प्रदापयेत् ।
शर्कराक्षौद्रसंयुक्तां तथा संपद्यते सुखी ॥ ४ ॥
रक्तातिसारे बालानां गुडिकां दापयेद्भिषक् ।
पञ्चवल्ककषायेण तण्डुलानां रसेन वा ॥ ५ ॥
शर्कराक्षौद्रसंयुक्तां शशस्य रुधिरेण वा ।
ऐणेयहरिणाभ्यां वा रक्तैर्मधुविमिश्रतैः ॥ ६ ॥
उदावर्त्तेषु बालानां गुडिकां दापयेद्भिषक् ।
गुडोदकेन संयुक्तां त्रिफलाया रसेन् वा ॥ ७ ॥
आमातिसारे बालानां गुडिकां दापयेद्भिषक् ।
[द]धिमण्डेन संयुक्तां तिन्तिडीकरसेन वा ॥ ८ ॥
शर्करा चाश्मरी चैव मूत्रग्राहे प्रमेहिषु ।
गुडिकां दापयेद्वैद्यो मधुनाथ प्रसन्नया ॥ ९ ॥
आसवे[न] सुजातेन बालानान्दापयेद्भिषक् ।
सुखं भवति तेनास्य काश्यपस्य वचो यथा ॥ १० ॥
तेन कोष्ठगतो जंतुः क्षिप्रमेव प्रमुच्यते ।
शिरोरोगेषु शमनं वमनं चैव शाम्यति ॥ ११ ॥

क्रिमिर्गुदगतो यस्य गुडिकायाः प्रलेपयेत् ।
तेनास्य सौख्यं भवति काश्यपस्य [व]चो यथा ॥ १२ ॥
अविज्ञातेषु रोगेषु गुडिकां दापयेद्भिषक् ।
सुखोदकेन संयुक्तां सर्व्वरोगविनाशनीम् ॥ १३ ॥
समीक्ष्य कुशलो वैद्यः कुर्व्वीत विविधाः क्रियाः ।
बलाबल[ञ्च] बालानामृतुं कालं समीक्ष्य च ॥ १४ ॥
क्रियां पञ्चविधां वैद्यो धात्रीणामुपपादयेत् ।
विरेकं वमनं चैव तथैवाप्यनुवासनम् ॥ १५ ॥
परिकर्त्तिकासु बालानां गुडिकां दापयेद्भिषक् ।
~वराहविष्ठासंयुक्तान्तथा तण्डुलधावनैः ॥ १६ ॥
शर्कराक्षौद्रसंयुक्तां पाययीत चिकित्सकः ।
~सुखी भवति तां पीत्वा काश्यपस्य वचो यथा ॥१७॥
हिक्काश्वासेषु कासेषु गुडिक[ां] दापयेद्भिषक् ।
[म]ातुलु[ङ्गेन सं]युक्ता गन्धसौवर्च्चलेन वा ॥ १८ ॥
जंतुभिर्बाध्यमानस्य गुडिकां दापयेद्भिषक् ।
दाडिमोदकसंयुक्तां मधुनाथ प्रसन्नया ॥ १९ ॥
तथा शिरोविरेकांश्च लेहान्प्रव्यंजनानि च ।
[भो]ज[य]तां भोजनं चैषा यवागूर्लघुभोजनम् ॥ २१ ॥
कामलापाण्डुरोगेषु श्वयथूनां तथैव च ।
युक्तां पीलुकषायेण गुडिकां दापयेद्भिषक् ॥ २१ ॥
रोहिण्यां तालुशोषे वा गलगण्डोपजिह्विके ।
चूर्णितां गुडिकां दद्याद्दन्तमांसं च पीडयेत् ॥ २२ ॥
सुखेन दन्ता जायन्ते श्वयुथुश्चोपशाम्यति ।
तेनास्य रोगाः शाम्यन्ते आरोग्यञ्चाधिगच्छति ॥ २३ ॥

दद्रुकुष्टकिलासानां पामास्वथ विचर्च्चिके ।
त्वग्गतेषु च रोगेषु गुडिकां दापयेद्भिषक् ॥ २४ ॥
कंपिल्यकस्य चूर्णानि चूर्णानि गुडिकाय च ।
पिष्ट्वा सर्षपतैलेन तेनैनमनुलेपयेत् ॥ २५ ॥
गोमूत्रेण सुखोष्णेन खादिरेण रसेन वा ।
सेच्यो निम्बकषायेण तेन संपद्यते सुखी ॥ २६ ॥
छाया वा पूतनावापि यश्चवाप्युपरिग्रहः ।
वस्तमूत्रेण संयोज्य गुडिकां तस्य दापयेत् ॥ २७ ॥
अथवा कल्कपिष्टायां गुडिकायां प्रलेपयेत् ।
तथा सर्व्वग्रहास्तस्य प्रशाम्यन्ति सुदारुणाः ॥ २८ ॥
पार्श्वशूलेषु बालानां गुडिकां दापयेद्भिषक् ।
कुलत्थरससंयुक्तां युक्तां मांसरसेन वा ॥ २९ ॥
धात्र्याः शुद्धशरीरायाः दोषाः शाम्यन्ति दारुणाः ।
बलं वर्णश्च बालानां क्षिप्रं समुपजायते ॥ ३० ॥

* इति काश्यपीया गुडिका *

अथबि(वि)त्रसते बालो रोदते भीक्ष्णमेव वा ।
त्रिफलां सह पिप्पल्यो लेहयन्मधुसर्पिषा ॥ ३१ ॥
मण्डलानि विवर्णानि गात्रे लक्ष्यन्ति यस्य तु ~ ।
[द]शमूलैः सुपिष्टैस्तं घृतमिश्रैः प्रलेपयेत् ॥ ३२ ॥
कल्कैः पुनर्न्नवायाश्च तथैव मधुकस्य च ।
सुखोदकेन सेकश्च सततं तस्य कारयेत् ॥ ३३ ॥
रो(रु)दतो यदि वा तस्य ~कासः श्वासोपि वा भवेत् ।
अंतर्द्दशाहजातस्य यूषं कर्क्कटकस्य च ॥ ३४ ॥
लवणं पिप्पलीयुक्तं तथा शंबूकशुक्तिका ।
वालयूषसुसिद्धं वा तस्मै बालाय दापयेत् ॥ ३५ ॥

ज्वरितस्याथ बालस्य मातुः क्ष[ी]रं [वि]शोधयेत् ।
[. . . . . . . . .] कषायमुपकल्पयेत् ॥ ३६ ॥
उशीरं भद्रमुस्ताञ्च त्रायमाणामथापि च ।
तथा चन्दनकल्केन मधुकं च सशर्करम् ॥ ३७ ॥
जीवनीयोपसिद्धञ्च घृतमभ्यंजनं हितम् ।
कृशस्य शुष्यतो वापि कुमारस्याङ्गवर्द्धनम् ॥ ३८ ॥
प्रवक्ष्यामि विद्ध(वृद्ध)सिद्धं बलवर्णकरं परम् ॥ ३९ ॥
कुशकाशसुशीराणि द्राक्षापद्मस्य केसरम् ।
सिद्धमेतत् पयो देयं कृशाय सहशर्करम् ॥ ४० ॥
एतैः सिद्धं घृतं वापि जीवनीयैश्च लेपयेत् ।
मधुपर्ण्या विपक्कं तु क्षीरमस्मै प्रदापयेत् ॥ ४१ ॥
तर्कारीमुत्पलं चैव सैन्धवं विकसां तिलान् ।
अपामार्ग्गफलं कुष्ठं चूर्णमामलकस्य च ॥ ४२ ॥
अश्वगन्धां वचां चैव प्रियंगु गौरसर्षपान् ।
समभागानि सर्व्वाणि दध्ना सह विमिश्रयेत् ॥ ४३ ॥
एतदुन्मर्द्दनं श्रेष्ठं हीनमांसे प्रयोजयेत् ।
क्षीरद्रोण्यां सुशीतायां स्वभ्यक्तमवगाहयेत् ॥ ४४ ॥
अथ श्वसिति यो बालः कासते क्कथतेपि च ।
तस्मै लेहानिमान्दद्यात्पतिपानमथापि च ॥ ४५ ॥
कट्फलं शृंगवेरञ्च पिप्पल्योथ हरीतकी ।
सौवर्च्चलञ्च चूर्णानि लेहयेन्मधुसर्पिषा ॥ ४६ ॥
हरेणुकां पिप्पलीञ्च सूक्ष्मेलां सदुरालभाम् ।
द्राक्षां चेति सुपिष्टानि लेहयेन्मधुसर्पिषा ॥ ४७ ॥
कुष्ठं पुष्करमूलञ्च शृंगवेरं हरीतकी ।
कल्कपेष्याणि सर्वाणि जलेनोष्णेन पाययेत् ॥ ४८ ॥

भद्रमुस्तां अथो हिंगुं तगरं सहचोरकम् ।
सुखोदकेन पिष्टानि पिबेत् कासनिवारणम् ॥ ४६ ॥
लाक्षां हरिद्रां मंजिष्ठां पिप्पलीं देवदारु च ।
एभिश्चूर्णीकृतैः सर्पिर्युक्तं कासनिवारणम् ॥ ५० ॥
तृषार्त्तस्य च बालस्य दीनवक्त्रस्य शुष्यतः ।
गवादनीं दाडिमश्च जलयुक्तं प्रयोजयेत् ॥ ५१ ॥
कल्कं पिष्ट्वा प्रियंगूनां भद्रमुस्तस्य चैव [ि]ह ।
तण्डुलोदकसंयुक्तं दद्यान्मधुविमिश्रितम् ॥ ५२ ॥
तण्डुलान् परितप्तांस्तु भद्रमुस्ता [. .]सुनेत् ।
चत्वारो[1] जर्जरीकृत्वा नवे मृत्तिकभाजने ॥ ५३ ॥
मधुयुक्तं प्रसंनं तं तृष्णाच्छर्द्यार्दितः पिबेत् ॥ ५४ ॥
मध( धू )दकं चापि पिबेत् [पिबेन्माध्वीक]मेव वा ॥५५॥
अश्वगन्धासर्जरसं यवचूर्णमथो दधि ।
मधुसर्पिर्बि(र्वि)मिश्रेण स शिरस्कं प्रलेपयेत् ॥ ५६ ॥
दाहतृष्णश्च छर्दिश्च सर्व्व[रोग]विनाश[नम्] ।
[तस्मा]देष प्रयोक्तव्यः प्रयोगो हिमशीतलः ॥ ५७ ॥
यस्य विस्फोटका गात्रे परिदाहश्च लक्ष्यते ।
तं तिक्तमधुरैः शीतैः कषायैः समुपक्रमेत् ॥ ५८ ॥
अथ पर्प्पटकं [ चू ]र्णं उशीरं गौरमृत्तिकाम् ।
समसुद्धृत्य सर्व्वाणि पिष्टैरालेपनं हितम् ॥ ५६ ॥
सौगन्धिकं शर्कराश्च कुमुदस्य च केसरम् ।
चन्दनश्च समांजिष्ठं कुर्यादालेपनं शिशोः ॥ ६० ॥

---

१. केचित् "चतुरो" इति युक्तं मन्यन्ते । अस्मिन् श्लोके चतुर्द्रव्याणां प्रतीतेरसंभवत्वात् । अत्र "चतुरः" निपुणार्थे ।

शर्क्करोद्मथो शुक्तिं शंखं शाद्वलवेतसम् ।
एतदालेपनं कुर्याद्विस्फोटकाविनाशनम् ॥ ६१ ॥
मुखपाकेषु मृद्वीकां क्षौद्रयुक्तां प्रलेपयेत् ।
रसांजनमधुभ्यां च मुखमस्य विशोधयेत् ॥ ६२ ॥
मातुः स्तनं हि यो नेच्छेन्मुखपाकेन बालकः ।
सुमनायाः प्रवाडैस्तं सक्षौद्रैः प्रतिसारयेत् ॥ ६३ ॥
शरैषीकांमषिं चैव कल्केनैतेन कारयेत् ॥ ६४ ॥
वक्त्रं विशुद्धं विज्ञाय सर्पिषा प्रतिसारयेत् ।
ततः पुष्पाणि धातक्यः स(श)ल्लक्या जिङ्गणीमपि ॥६५॥
समंगां रोहिणीश्चैव पिष्ट्वा तैलं विपाचयेत् ।
कर्णस्रावे कर्णतैलं शोधयित्वा पुनः पुनः ॥ ६६ ॥
बिल्वचन्दनसिद्धञ्च तैलं स्यात्पूरणे हितम् ।
बिल्वकल्कं विपक्वञ्च कपित्थस्य रसेन च ॥ ६७ ॥
क्षीरं कर्णे प्रयोक्तव्यं तैलं स्रोतो विशोधनम् ।
सर्व्वगन्धविपक्वञ्च पूतिकर्णे प्रशस्यते ॥ ६८ ॥
अक्षगुग्गुलुना चैव संशुद्धे परिधूपनम् ।
कर्णौ रुजार्त्तौ मतिमान् गन्धतैलस्य पूरयेत् ॥ ६९ ॥
मूलकस्य रसश्चापि सुखोष्णः कर्णपूरणम् ॥ ७० ॥
कुलीरश्रृंगीमरिचानिलाजा मधूलिकां मागधिकाञ्जनं च ।
नवे कपाले मधुकं मधुञ्च च्छर्द्यार्दिते तैलमुदाहरन्ति ॥७१॥
पिप्पल्यः शर्करा लाक्षा मधुकं मरिचानि च ।
तुक(गा)क्षीरेण सक्षौद्रो लेहश्छार्द्दिविनाशनः ॥ ७२ ॥
भार्ग्गी सपिप्पली पाठा पयस्या [मधुना सह] ।
[श्लेष्मि]मकया लिहेच्छर्द्या इति होवाच जीवकः ॥७३॥

भद्रदारुं च कुष्ठं च हरीतक्यः ससैन्धवम् ।
घृतेन् लिह्यान्ये[तान्ये]वमथो मारुता[त्मके] ॥ ७४ ॥

. . . . . . . . . . . . . . . . . .

सपिप्प( ि)लीको लेहः स्यात्क्षिप्रं छर्दिं निगृह्णति ॥७५॥
गोमयस्य रसन्दद्याच्चातुर्ज्जातकसंयुतं ।
विलिह्य मधुना जंतुस्तेन छर्द्या विमुच्यते ॥ ७६ ॥
पिप्पली म( ि)रचाना(नां) च चू[र्णं मधुशर्करम् ] ।
[रसेन] मातुलुंगस्य योज्येच्छर्द्दिनाशनम् ॥ ७७ ॥
आम्रजम्बूप्रवाडांश्च क्षीरिणां च समावपेत् ।
पयस्या शारिवामूलं गण्डीरं च सचित्रकम् ॥ ७८ ॥
एतत्क्वाथ्य पिवेद्बालो मधुशर्करया युतम् ।
[त्रि]गन्धिकयुतं हृद्यं छर्द्यतीसारनाशनम् ॥ ७९ ॥
बिल्वमूलस्य निक्काथो लाजाचूर्णैः सुसंस्कृतः ।
क्रिमिच्छर्द्यां लिहेद्बालः शर्करामधुयोजितम् ॥ ८० ॥
एलां हिंगुं च भार्ग्गीश्च शृङ्गवेरं ससैन्धवम् ।
घृतेन पाययेत् क्षिप्रं वातशूल[ विनाशनम् ] ॥ ८१ ॥
श्वेतांस्तिलान्समधुकाञ्च्छर्क्करा तैलमाक्षिकैः ।
लेहः प्रवाहिकां हन्याल्लोहितं यश्च सार्यते ॥८२ ॥
मधुकं तिलकल्कश्च शर्करा मध्वथापि च ॥ ८३ ॥
तण्डुलोदकसंयुक्तं [दद्यात् स]मधुशर्करम् ।
रक्तातिसारे बालानां तथा संपद्यते सुखी ॥ ८४ ॥
वटशुंगाश्च रोध्रं च कार्ष्मर्याण्यथ शर्करा ।
मधुकं बिल्वमूलं च समंगांशुमतीं व(ब)लाम् ॥ ८५ ॥
कृत्वा सशाल्मलेः पुष्पं पृश्नपर्णीं सधातकीम् ।
एतैः सिद्धं घृतं हन्यात्क्षिप्रमेव प्रवाहि[काम् ] ॥ ८६ ॥

वरांगमथ रोध्रञ्च मुख्यान्यामलकानि च ।
समानि क्षौद्रयुक्तानि चूर्णानि मुखधा[वनम्] ॥ ८७ ॥

हरिद्रा निम्बपत्राणि मधुकं मधु सोत्पलम् ।
तैलमेतद्विपक्तव्यं मुखपाके समार्कवम् ॥ ८८ ॥

सक्षौद्र[ाणि] कषायाणि त्रिफलाचूर्णमेव च ।
मुखपा[के प्रश]स्तानि धावनं छर्दनानि च ॥ ८९ ॥

द्वे बृहत्यौरुबूगक् श्वदंष्ट्रा वाश(स)कावुभौ ।
शृंगवेरं यवांश्चैव दर्भौ वृक्षाद[नीं तथा] ॥ ९० ॥

क्षीरमुत्क्वाथयेदेभिः पिप्पली[घृत]संयुतम् ।
उरोद्धा(घा)तेषु दातव्यं इति भाषति जीवकः ॥ ९१ ॥

खुड्डाकं पञ्चमूलञ्च कुलत्थावदराणि च ।
ससैन्धवो [. . . .] पत्रगाह घृतायुतः ॥ ९२ ॥

द्वौ करंजौ दर्भञ्च क(ा)र्पासीमधुशिग्रु च ।
श्वदंष्ट्रा वसुकश्चैव मृणाल्यश्चोत्पलैः सह ॥ ९३ ॥

एतैः सिद्धां पिबेद्या . . . . . . . . . . ॥ ९४ ॥

. . . . . . . . . शर्कराच . . भवेत् ।
पिप्पलीसैन्धवं चैव सूक्ष्मेला मरिचानि च ॥ ९५ ॥

शर्करा मधुसंयुक्तो ल . . . . . . . . ।
. . . . . . . . . पचेत्कालयवैः सह ॥ ९६ ॥

कुलत्थान्मधुशिग्रुञ्च कल्पितस्तित्तिरिस्तथा ।
अल्पस्नेहो रसस्तेषां सौवर्च[ल . . . .]॥ ९७ ॥

. . . . . . . . . शर्करासु प्रशस्यते ॥ ९८ ॥

जम्बूप्रवालास्तरुणाः कपित्थाः वटप्रवाडानि तथा प्रशुंगाः ।
एतैर्व्विपक्वं हितमाहतैलं कर्णस्रा[व . . . . . . . . ] ॥९९॥
. . . . . . . . . . . . . . अवल्गुजः पिप्पली चूर्णमिश्रम् ।
फलं वृहत्या मरिचं विडंगा तथाश्वमारं च क्रिमिघ्नमाहुः॥१००
कुष्ठं हरि[द्रं . . . . . . . . . . . . . . . ] जात्फलञ्च ।
. . . . पिष्टं हितमेतदाहुरुन्मर्द्दनं कच्छुविनाशनाय ॥१०१॥
सिध्मानि दद्रु किटिभानि पामा सर्वांश्चत्वग्दोश . . . . . ।
[. . . . . . नि]षेव्यमानां [. . ]सदा शस्तमिदं शिशूनाम् ।१०२
नीलोत्पलानां नाड(ल)ानि शालूकानि विसानि च ।
क्षीरिणां च प्रवाडानि यष्टिमधु[कमेव च] ॥ १०३ ॥
[दर्भमूलोशीरचुक्रं क्वा]थयेत् विम[ला]म्भसि ।
शर्करा मधुसंयुक्तस्तृष्णा शमनमुत्तमम् ॥ १०४ ॥
नीलोत्पलान्यामलकं प्रियंगु शारिवा तथा ।
पिष्टैरेतैः कुमा[राण] . . . . . . . . ॥ १०५ ॥
[दाडि]मस्य च वीजा[नि] चन्दनं पद्मकेसरम् ।
पिप्पल्यः शर्करा क्षौद्रं लेहस्तृष्णाविनाशनः ॥ १०६ ॥
त्वचप्रवाडानि समानयित्वा क्षीरद्रुमाना(णां) . . . . . . ।
. . . . . च नवे ।विदद्ध्यात्कुं[भे . . ]चाभ्यवकाशदेशे॥१०७।
सशारिवोशीर सनागपुष्पं सचन्दनं पद्मककालमिश्रम् ।
आलोड्य नीलोत्पलपत्रयुक्तं . . . . . . . . . . च ॥१०८॥
एतैः कषायैः परिषिक्तगात्रः पिवेत लावेन रसेन युक्तम् ।
सशर्करस्तां विधिवत्सुशीतं बालस्य नित्यं लवणांब्ल(म्ल)वर्ज्यम्१०९

शीताः प्रदेहाः [परिषेचनानि अत्यंत] शीतानि गृहाणि चैव ।
धात्र्यश्च शीतार्द्रपटोत्तरीया रसाश्च शीताः शमयन्ति तृष्णाम्॥ ११०
तृष्णापहश्चैष विधिः प्रदिष्टस्तथैव पित्तज्वरदाहहन्ता ।
मूर्वा . . . . . . . . . . . . . . . . ा [म]ह प्रयोज्यः ॥१११॥
हिंगुः कर्कटश्रृंगीगैरिकमरिचानि नागरकमेला ।
एष मधुसंप्रयुक्तः कासेहिक्का[यां श्वासे चैव] ॥११२॥

The fifteenth and sixteenth chapters desunt*.

---

* The remainder of this work containing the fifteenth and sixteenth chapters, concerned with the treatment of barren and prolific women, as well as perhaps the concluding portion of the fourteenth chapter, is wanting. It may have consisted of about five leaves.

With a very few exceptions the whole of the formulae in this medical treatise are not traceable else where.

# [ तृतीयप्रकरणम् ]

[ . . . . . . . . चि]त्रकदन्तीकरवीरगुंजलांगलकी ।
वृहतीसुवर्णपुष्पी पीलुर्व्विश्वाह्वयनाहिका[1] ॥ १ ॥
कास . . . . . . . . . . . . . . . . . . . . ।
[क]र्षांशिकैः सुपिष्टैर्द्दद्यात्क्षीरार्क(र्ध)कुडवञ्च ॥ २ ॥
ऐतैर्द्रव्यैर्म्मिश्रं तैलप्रस्थं चतुर्गुणे तोये ।
मू[त्र . . . . . . . . . . . . . . . . ] ॥ ३ ॥
[ . . ] सुदद्रुकिटिमेकुष्ठेष्वथ कत्तिमालासु ।
नाडीव्रणदुष्टव्रणविषदूषितगणुमालासु ॥ ४ ॥
[ . . . . . . . . . . . . . . . . कद]म्बश्च ।
एरण्डकुष्ठपाठाविद(ड)ङ्गसु [ . . . ] निर्गुण्डी ॥५॥
श्रिवेष्टककंपिल्यकसुरदारुमनशिशला ।
विशाल . . . . . . . . . . . न्महाद्रुमाच्चैव ॥ ६ ॥
अर्धाक्षभागमात्रैः सिद्धं तैलं निहन्ति अर्शांसि ।
अग्निर्व्वा शस्त्रं वा क्षारं वा शोषयेत्तैल[म्] ॥ ७ ॥
[ . . . . . . . . . . . . . ] व्रणाः सन्ति ।
दद्रुं श्वित्रं पामां विचर्च्चिकां मण्डलानि ॥ ८ ॥
सिध्मानि योनीभगन्दराणि च विनाशयेत् [वज्रकं] तैलम् ॥९
. . . . . उ ]त्क्वाथ्य भल्लातकशतत्रयम् ।
पादशेषे जले तस्मिन् . . . . . . . ॥ १० ॥

---

१ नहिकास्थाने "नखिका" युक्ता इति प्रतीतिः । केचित्तु नहिका एव हि नखिका नामान्तरं प्राकृतभाषायां इति मन्यन्ते । नखीविशेषतया चर्मरोगे प्रयुक्तो भवति ।

विषामतिविषाश्चैव पेष्याणि पलशः [क]ष(क्षि)पेत् ।
[1]. . . . पिबेत्तैलं मात्रया शक्त्युपेतया ॥ ११ ॥
तस्मिञ्जीर्णे तु आहारमुपपन्न्या समाचरेत् ।
[2]अ[ष्टा] . . . . द्धीरो बुद्धः क्लेशगणानिव ॥ १२ ॥
माणिभद्रेण दत्तोयं योग एष मुमूर्षवे ।
कारुण्यादार्द्रचित्तेन भिक्षवे कुष्ट[नाशनः] ॥ १३ ॥
. . . . . . . . . विशीर्णांगुलिनासिकाः ।
एतेन सुप्र[दु]र्जातो ग्रहमुक्त इवोडुराट् ॥ १४ ॥
त्रायमाणां विशालां च क[टु]करोहिणी . . . ।
. . . . . . . . . त्व]गेलश्च समांशिकाः ॥ १५ ॥
नहिकाक[ं] सियुक्तान्(नि) सूक्ष्मचूर्णानि कारयेत् ।
खदिरासनसाराणां कुड(ल) [व . . . . .] ॥ १६ ॥
[. . . . . . . . . . . . . विपाच] येत् ।
पिबेत् कर्षेण संसृज्य चूर्णस्याद्याच्च भोजनम् ॥ १७ ॥
जीर्णे सर्पिर्व्विमिश्रेण मुद्गसूपेन षष्टिक[म्] ॥ १८ ॥

. . . . . . . . . . . . . . . . . . . इन्दि(न्द्रि)यस्य
योगा अयोगे न तु बाह्यमाना । ग्रीष्माभितप्तास्तुरगा यथैवेति॥१९
अयः पलार्धे त्रिफ[ला . . . . . . . . . . . . . . . ] ।
विडङ्गस(ा)र(रं)खदिरस्य चार्धात्समा वडगेन(विडंगेन) च ....॥२०
. . . . . . . . . . . ऋतुस्थितं द्वे कलशे विशोष्य ।
सर्प्पिर्म्मधुभ्यां स्थविरो लिहेत . . . . वत्प्रव . . . . ॥२१

---

१. एकमासं इति युक्तं प्रतीयते ।

२. अष्टादशाहानि इति केचित् ।

. . . . . . . . . . ह्मानः श्वासाभिभूतश्च पलाग्रहस्तः ।
प्रशीर्णदंतो विकलेन्द्रियोपि जी[र्णा]भिभूतो . . . . . ॥२२
. . . युक्तोभिरतश्च धर्म्मे सर्पिः पयोभ्यां हितमन्नमश्नं(श्नन्) ।
स्तारुण्यसौरुप्य .[1] . . . . ॥ २३ ॥
. . . . . . . . . . हानो रसाशनो मुद्गरसाश[नश्च] ।
. . . गात्रावयवोपि कुष्ठी कुष्ठं . . . . . . . . . ॥२४॥
. . . . . पाठानां तेजोवत्यास्तथैव च ।
पिप्पलीनाञ्च मूलस्य भागान्कुर्याच्चतुष्पलान् ॥ २५ ॥
. . . . . . . . . . . . . . . . . . ।
ि [ं]तायाः प्रवाडानां मालतीकरवीरयोः ॥ २६ ॥
त्वक् च सप्तपलाशस्य तथा शाकोटक[स्य च] ।
. . . . . . . . . . . . . . . [निधा]व[प]येत् ॥२७॥
अग्नी(ग्नि)ना चैव युक्तेन सम्यकुर्व्वीत् साधनम् ।
चतुर्भागावशिष्टं तु अथैनमवतारये[त्] ॥ २८ ॥
. . . . . . . . . . . . . . . . . . . म् ।
भवेदतिविषायास्तु तुल्या कटुकरोहिणी ॥ २९ ॥
पिप्पलीनां च कुडवं विडंगानां तथैव च ।
कटुजस्य च . . . . . . . . . . . . ॥ ३० ॥
. . . . वयोश्चात्र दद्यात् द्वे द्वे पले धृते ।
क्षारस्य यावशूकस्य स्वर्ज्जिकायास्तथैव च ॥ ३१ ॥
अनेन चक . . . . . . . . . . . . ।
क्षाराभ्यां लवणाभ्याञ्च पचेत् वैद्यो घृताढकम् ॥ ३२ ॥

१. गुणोदयस्तः, as in (अष्टाङ्गहृद्ये) vi, 39, v. 165

कर्ष्षो जीर्णे तु पातव्यो विष्टब्धे . . . . . ।
. . . . . . . . . सर्व्वे शाम्यन्ते देहिनाम् ॥ ३३ ॥
[रक्त]पित्ताश्रयान्व्याधीन् गुल्मांश्चैव पृथग्वि[धान्] ।
. . . . . . . . . . . . . . . . . . ॥ ३४ ॥
स्निग्धं भुंजीत चात्यर्थं खादेन्मां[सं च पी]वरम् ।
अत्यग्निप्रतिघातार्थं कांक्ष . . . . . . ॥ ३५ ॥
. . . . . . न्व्याधीन्निहन्यात्परिकीर्त्तितान् ।
एतदग्निघृतं नाम आत्रेयविहितं पुरेति ॥ ३६ ॥
[शतावरी चांशुमतिपूतिका बृहतीद्व]यम् ।
गन्धर्व्वस्य च मूलानि मूलं समा(ह)चरस्य च ॥ ३७ ॥
अग्निमन्थस्य विल्वस्य श्वदंष्ट्रा [सपुनर्न्नवा] ।
[एषां दशपलान् भागान्] जलद्रोणे विपाचयेत् ॥ ३८ ॥
शतावरीरसप्रस्थे [क्ष]ीरप्रस्थ[चतुष्टयम्] ।
[पादावशेषे पूते च गर्भे चैनम् समाचरेत्] ॥ ३९ ॥
[शतपुष्पादेवदारु मासीं शैलेयकं वचाम्] ।
चन्दनं तगरं कुष्टमेलामंशुमतीमपि ॥ ४० ॥
एतेषां कर्षिकान् भागांस्तस्मिंस्तैले(ि)वप(ा)चयेत् ।
[अस्य तैलस्य सिद्ध]स्य शृणु वीर्यमतः परम् ॥ ४१ ॥
पङ्गूनां वडवानाश्च कुब्जानां वमनैः सह ।
समासेन च भग्नानां भग्नास्थीनां तथैव च ॥ ४२ ॥
वातगु[ल्मैश्च हृच्छूलैः]प(ा)र्श्वशूलैश्च दारुणैः ।
कासैः श्वासैः प्लिहैर्गुल्मैर्जलोदरभगन्दरैः ॥ ४३ ॥
कामलापाण्डुरोगैश्च क्षयक्षीणहतप्रभैः ।
[एकांगं] क्षीयते यस्य गतिर्यस्य च दुर्ब्बला ॥ ४४ ॥

क्षीणेन्द्रियाश्च ये केचिज्जराजर्जरिताश्च ये ।
उच्चैः शृण्वन्ति ये केचिद्ये चल्लाभवन्त्यपि (?) ॥ ४५ ॥
मन्दमेधाश्च ये लोके श्रुतं येषां च नश्यति ।
सविनायका नरा ये च नारीणामप्रियाश्च ये ॥ ४६ ॥
वातिका वृषणा येषां अन्त्रवृद्धिश्च दारुणा ।
नारीणां चैव या बंध्या काकवन्ध्या च या भवेत् ॥४७॥
स्थितार्त्तवा च या नारी तथा नष्टार्त्तवा च या ।
गर्भं न लभते या च भग्नगर्भा च या भवेत् ॥ ४८ ॥
योनीशूलेन या बन्ध्या तथैव च परिस्रवा ।
दद्रुकिटिमकुष्ठानि मण्डलानि विचर्चिका ॥ ४९ ॥
यावन्तः श्लेष्मिका रोगा वातिकाः पैत्तिकाश[च](श्च) ये ।
प[ पू ]तिकं च मुखं यस्य मुखे दुष्टव्रणाश्च ये ॥ ५० ॥
सर्व्वेषामेव रोगाणामेतदाहुः प्रसाधनम् ।
नस्यं पानमथाभ्यंगस्त्वनुवासनमेव वा ॥ ५१ ॥
ले[हनं च] प्रयोक्तव्यं आयुर्वृद्धिकरं नृणाम् ।
[ि]सद्धार्थं नाम नाम्ना तु ना[राय]णविनिर्मितम् ॥५२॥
वरुणकशाकं छागलमथितेन सिद्धं गोधूमाद्य भुंजीत ॥५३॥
. . . . . मूलानि मरिचानि सितानि च ।
गवां मूत्रेण पिष्टानि श्वित्रस्योद्वर्त्तनं परम् ॥ ५४ ॥
गुग्गुलमरिचविडंगैः सर्षपकासीसमुस्तसर्जरसैः ।
श्रीवेष्टकाल[गंधैर्मनः]शिलातुत्थकंपिल्यैः ॥ ५५ ॥
उभयहरिद्रासहितैस्तैलविमिश्रैः स्थितैर्दिनकराग्रौ ।
एभिर्लिप्तं कुष्ठं व्रणाश्च दुष्टाः स(श)मं यांति ॥ ५६ ॥
दंतीत्रिवृद्विडंगानां प्रत्येकं पलपञ्चकम् ।
मुस्तापलानि त्रीणिस्युर्हरीतक्याः पलं भवेत् ॥ ५७ ॥

काकोदुम्बरिका मूलपलद्वितयमेव च ।
स्नुहा(ी)क्षीरेण बध्नीयादष्टौ दश च मोदकान् ॥ ५८ ॥
दशमे दशमे दिवसे(दिने) प्राश्नीयादेकमोदकम् ।
जीर्णे चापि पिवेन्मण्डं द्वितीये च विलेपिकाम् ॥ ५९ ॥
पञ्चरात्रेण कामार्तं सर्व्वकुष्ठविनाथ(श)नाः ॥ ६० ॥

* इति . . . प्रसिद्ध मोदकाः *

धात्र्यक्षपथ्या सविडंगवाह्निरारुष्करावल्गुजभृंगलोहैः ।
क्रमप्रवृद्धैस्तिलतैलमग्नैः सर्व्वा[नि कुष्ठानि निहं]ति लेहात् ॥६१॥

* अकाकोलीनेऽपि उद्वर्त्तयेत्* ॥ ६२ ॥

करवीरकेन्द्रवारुणिलांगलमूलाः समाः सगुग्गुलुकाः ।
गृहधूमार्धांशयुता युक्ता[1] वस्त[म्बुना सिद्धम् ] ॥ ६३ ॥
[बदर]प्रमाणगुडिकाः कृत्वा शुष्का भगान्दरे विवृते ।
प्रतिदिनमनु तद्दिशतः प्रन(ण)श्यति भगन्दरं न चिरात् ॥६४॥
पुनर्न्नव[2][ा]गुडूचिनागरम् अथष्टेका[पाठकम्] ।
[सुपिष्टा] वटपत्रनाडपिडकोद्भवे देहिनाम् ।
भगन्दरविनाशनं विमलतोयपिष्टं विदुः
वदन्ति भिषजोत्तमैः सततमेव निर्धारितम् ॥ ६५ ॥
तालीसं मरिचं चव्यं पलार्धीनानि नागरान् ।
अध्यर्द्धं पिप्पलीमूलात्पिप्पल्याश्च पलं पलम् ॥ ६६ ॥
कर्षः स्यान्नागपुष्पस्य त्रुटिकर्ष्षार्धमेव च ।
[पलं शूरणकन्दस्य चू]र्णत्रिगुणितो गुडः ॥ ६७ ॥

---

१. "युक्त्वा" इति शुद्धम् ।

२. See Yogaratnākara ( भगंदर ) ।

अतोक्षमात्रा गुडिका मद्ययूषपयोरसैः ।
पीतांभसा भक्षिता वा सर्व्वान्हन्याद्गुदो[द्भवान्] ॥ ६८ ॥
[ शू ]प(ल)पानात्ययच्छर्दिप्रमेहविषमज्वरान् ।
गुल्मपार्श्वरुजाशोथहृत्पाण्डुग्रहणीगदान् ॥ ६९ ॥
कासहिक्कारुचिश्वास[क्रि]म्यतीसारकामलान् ।
मन्दाग्नितां मूत्रकृच्छ्रं हन्याच्छोथं[१]श्च सा भृशम् ॥ ७० ॥
एतदेव भवेच्च( चू )र्णं सिताचूर्णचतुर्गुणम् ।
सपित्तेषु विकारेषु विशेषेणामृतोपमम् ॥ ७१ ॥
सैव वा गुडिका पथ्यापलत्रयविशेषिता ।
शोथार्शोग्रहणीपाण्डुरोगशूलापहाधिकम् ॥ ७२ ॥
तद्यथाश्वेतेश्वेतस्याधिपत्ये शतस्याधिकरणे स्वाहा ॥

❀[ इति तृतीयप्रकरणम् ]❀

---

१. "शोषं" इति युक्त, शोथस्य पूर्वमेवागतत्वात् ।

# [ चतुर्थप्रकरणम् ]

(ॐ) नमो नन्दिरुद्रेश्वराय—नमो आचार्येभ्यः नमो ईश्वराय। नमो माणिभद्राय [नमस्सर्व्वयक्षे] [भ्यः]।

नमः सर्व्वदेवेभ्यः शिवाय नमः षष्ठीये (?) नमः।

प्रजापतये नमः रुद्राय नमः नमो वैश्रवणाय नमोमरुतानां (?) नमः प्रासकापतन्तु इमस्याथस्यकारणाहिलि ~ कुम्भकारि मातङ्गयुक्तापतन्तु यत्सत्यं सर्व्वसिद्धानां यत्सत्यं सर्व्ववादीनां तेन सत्येन सत्यसमयेन नष्टं विनष्टं [क्षेम]ाके[ष](क्षे)मं लाभालाभं जयाजयं शिवानुदर्शयस्वा सत्यनारायणे चैव देवते ऋषीषु चैव सत्यं मन्त्रं ब्रूतिस्सत्यं समक्षापतन्तु स्वाहा[1] सत्यं चैव तु द्रष्टव्यं नि . . . . . . . . . . . मन्त्रौषधीनां च निमित्तवलममन्तरम्। मृषतायां देवतं विष्णु नविकायां चण्टयाण्ट॥ (४)

४४४—नमः पुरुषसिङ्घस्य प्रसन्नस्तेजनार्द्दनः।
निहता शत्त्रवस्सर्व्वे यदिप्ससेकंम् नविक्को ॥

३३३ न ते शोको न वायासो नीचोच्चं न च तेभयः(यं)।
. . . . . . . . . . . . . . . . प्राप्सासि ॥

पटबन्धः—२२२ सर्व्वकामसमृद्धेपि सुखं जनिरुपद्रवं।
उत्पन्ने ततं चैव देवं शमयते भयम् ॥

कालविद्धिः—१११ परिहायिते ते बुद्धिः . . . . . . . . ।
आरःम्भश्चिन्तितो यस्ते निष्पल[2] स भविष्यति ॥

---

१. स्वाहा इति पठितव्यम्।

२. निष्फलः इति पठितव्यम् युक्तत्वात्।

शापटः–४४३ व्याधिभिर्म्मोक्ष्यसे क्षिप्रं सुखं वा प्राप्स्यसे तथा
नात्युच्चं नातिनीचं च फलमासादयिष्यसि ॥

द्वितीयः शापटः–[४](३४) आयेसो[1] दृश्यते घोरो येभ्यश्च तव विग्रहः
निष्फलं दृश्यते कार्य्यं पृच्छसे यस्य कारणा–॥

तृतीयः शापटः–३४४ समागमं चिन्तयसे कल्याणि[2] न च युज्यते
न ते शरीरे संतापो भोगां चैवोपलप्स्यासि ॥

[3]३४३ सर्व्वार्थसिद्धिसंपद्कामभोगः समान्वितः
अचिरेणैव कालेन भविष्यति स नित्याित्[4]॥द्वितीयामाली॥

अयं सपुण्यो लभसे ह्यानन्दः प्रीतिवर्द्धनः ।
अत्वरात्सुमहानर्था[5] त्वरितो वै न लप्स्यसि–॥

[6]४३३ अयं त्वया महानर्थश्चिन्तितोथस्ततोत्तमः ।
प्रवासं क्षेमगमनं वान्धवैश्च समागमः ॥

बहुलः ३२४ दीर्ग्घमायुर्म्महानर्थः प्राप्ससेनॅयमुत्तमम्[7]
धनधान्यं क(च)रित्रं च भोगानवि च प्रार्प्सासि[8] ।

द्वितीयो वहुलः–४३२ दृश्यते आगमयत्तत्वया सुपरिनिश्चितः ।
आत्मानं चैवार्थश्च ततो गृह्यागमिष्यसि ॥

तृतीयो वहुलः–२४३ बहुलं दृश्यते कार्यं वहुपुत्तत्वतां च ते ।
प्रतीक्ष शुभमात्मानं सर्व्वमेव तद्वाप्सासि–॥

---

१. आयास इति पठितव्यम् ।
२. कल्याणी इति युक्तम्
३. माली (प्रथम) इति स्थाप्यं शास्त्रे विषयत्वात् ।
४. नित्यतः इति युक्तम् ।
५. अर्थः इति युक्तम् ।
६. "तृतीय माली" इति स्थाप्यम् ।
७. नायम = न आयम् इति युक्तम् ।
८. प्राप्स्यसि ।

चतुर्थो वहुलः–४२३ वहुलो विजयस्तुभ्यं तुष्टामित्त्रगणाश्च ते ।
स्पृहे सातिपरस्तभ्य न परास्पृहयिष्यासि–॥

पञ्चमो वहुलः–३४२ स्नेहागमस्य ते चिन्ता संसिद्धेश्च परा तव ।
अन्योन्याभिहता प्रीति–किमागमिष्यति गम्यता ॥

कूटः–४१४ राजतो विग्रहोस्तीति धर्म्मास्याति[1]परिक्षय(ः) ।
लब्धं चैव फलं तस्माध्र्म्ममेव चरिष्यसि–॥

द्वितीयो कूटः–१४४ चलाचलमिदं स्थानं न सुखं प्रीतिवर्द्धनं ।
विप्रमोक्षसि देवैति[2] ग्रहीतोपि न संशयः–॥

तृतीयः कूटः–४४१ अस्ति क्षेमं भयं नास्ति विजयोप्यत्त दृश्यते ।
भोक्ष्यसे कामचांगाश्च कुताश्चिन्नास्ति ते भयम् ॥

[प्रथमा भद्रा]–४२१ परिक्षीणाह्यनर्थास्ते मुक्तस्ते[3] सर्व्वकिल्विषा ।
विजेष्यसि रूपूं सर्व्वां लाभस्ते समुपस्थितः–॥

द्वितीया भद्रा–२१४ मनसा चिन्तिता चिन्ता द्विपदस्य तु कारणा ॥
किञ्चित्कालमुदीक्षस्व ततोहस्तमुपैष्यसि–॥

तृतीया भद्रा–१४२
[प]ि [रप्राप]स्यसि कन्यां वै (मि)त्त[4] चैनुनयिष्यसि
प्रीति सौभाग्य संयुक्तं धनं दास्यन्ति देवताः ॥

चतुर्था भद्रा–२४१ वृत्तिश्चनाक्षयस्सर्वो देवतेभ्यो न ते भयम् ।
यथा कुर्व्वसि कुर्व्वाणो (. . . . अ)वाप्स्यसि–॥

४१२ शक्ती–३४१ परिग्रहं चिन्तयसे तच्चशीघ्रमवाप्स्यसि– ।
अर्थकामप्रदातारं वान्धवं प्रीतिदर्शनं–॥

---

१. धर्मस्य इति युक्तम् ।
२. देवेभिः ।
३. मुक्तास्ते ।
४. मित्रंचानुनयिष्यासि ।

द्वितीया शक्ती—१३४ [समा]गमं चिन्तयसे तच्च शीघ्रं समेष्यसि ।
अश्मीनै[1] (×) कृता लेखा नेष्या न भविष्यति—॥
तृतीया शक्ती—४१३ उपस्थितं विशिष्टस्ते तथा लाभश्च दृश्यते ।
कुटुंबेच। तुलवृद्धिर्भविष्यति न संशया ॥
चतुर्था शक्ती—३१४ एकच्छत्तां महीं कृत्स्नां राजानि हतकण्टकः ।
आक्रम्य भोक्ष्यसे शत्तुं गणैस्समुदितप्सदा ॥
पञ्चमी शक्ती—१४३ न चेच्छसि सुमित्तत्वं सुमित्तैराम्यसे सदा-।
कृताकृताश्चे ते मित्ता शत्तत्वं यान्त्यकारणं ॥
षष्ठी शक्ती—४३१ समागमं चिन्तयसे सर्व्वथा[2] ससमेष्यसि[3] ।
काले[4] प्राप्स्यसे सोर्थः अनिर्व्वेदं तथैव च—॥
दुन्दुभी—३२१ यत्तेनष्टं विनष्टं वा चोरैरपहृतं च यत् ।
परहस्तगतं वापि न चिरात्तद्वाप्स्यसि—॥
द्वितीया दुन्दुभी—२१३ विमुक्तस्त्वं सहायेस्तु[5] सुमित्तै सह वर्त्तसे ।
लब्धवाश्च प्रियाह्यर्था विरुद्धं देवतस्पृहा ॥
[तृती]य दुन्दुभी—१३२ परितोषः शरीरस्य दृश्यते तवसाम्प्रतम् ।
देवतानां च पूजायाः निवृत्तिरुपलभ्यते—॥
चतुर्थी दुन्दुभी—३२१ अस्ति कलहं घोरं शत्तभिस्सह दृश्यते ।
न तत्त लप्स्यसे क्लेशं प्रत्यर्थिं च विजेष्यसि—॥

---

१. अश्विनौ(व) इति युक्तम् ।
२. सर्व्वथा इति युक्तम् ।
३. समेष्यति इति युक्तं प्रतीतिः ।
४. कालेन ।
५. सहायैस्तु ।

पञ्चमी दुन्दुभी—३१२ उत्तमो दृश्यते लम्भः पुत्तजन्मं तथैव च ।
ईप्सितांश्चैव कामां प्राप्स्यसे नात्त संशयः—॥

षष्टी दुन्दुभी—१२३ परिभ्रमति बुद्धिस्ते स्थानं चैव चलाचलं।
मासमात्तमुदीक्षस्वं ततः सुखमवाप्स्यासि—॥

प्रथमो वृषः—४४२ यत्तवास्तिगृहे किञ्चिगावोधान्यं धनं तथा।
विसृज्यस्त्वं द्विजातिभ्यः वृद्धिस्ते समुपस्थिता—॥

[द्वितीया वृषः]—२४४ समागमं चिन्तयसे दूरस्थचैव ते प्रियः ।
समृद्धं सर्व्वकामेषु न चिरेण् समेष्यति ॥

तृतीयो वृषः—[४२४] [व]न्धनं प्राप्स्यसे घोरं पुनस्थानं च प्राप्स्यासि
भाविष्यति फलं चैव निर्वृत्तिश्च भविष्यति—॥

प्रथमा प्रेष्या—४२२ (.....)सवावा विद्यां वा यदि याचसे
गृहैव निरतस्तिष्ठ(ष्ठं) सर्व्वं हितवनिष्फलं—॥

द्वितीया प्रेष्या—२४२ यस्त्वया चिन्तितोह्यर्थः(.....)तर्हि ।
न पूरयाति तत्कर्म्मं यस्य पृच्छसि करणे[1] ॥

तृतीया प्रेष्या—२४२ (२२४) येत्वया[2] चिन्तिता वा च तदर्थस्य
तु कारणा [च] ।
(भ)विष्यत्यर्थलम्भस्ते [चिरे]णात्त(न)संशयः ॥

प्रथमा विटी—३३२ सातत्वं[3] त्वनिरायासः कर्म्मण्यश्चापि जीविते
नत्वं प्राप्स्यसे दुक्खं प्रत्यार्थिभिश्च विजेष्यसि ॥

---

१. कारणे अथवा कारणा ।

२. यत् त्वया ।

३. सातत्यं इति शंकासहितम् ।

द्वितीया विटी–३३३ न युज्युसे फलार्थेन निर्व्वेदेन च युज्यसे ।
अन्यत्त् त्वरितो गच्छ(गच्छ्) लप्स्यसे सुखमुत्तमम्–॥

तृतीया विटी–२३३ दृश्यते ते अभिप्रायोद्विपद[स्यात्तु] कारणा ।
समेष्यति ते तत्वेन मरुतस्य वचो यथा ॥

प्रथमकर्ण्ण–११४ संपूज्य सर्व्वकर्म्माणि सौभाग्य(यं) निरुपद्रवं
राजलम्भस्तुलप्स्यसेन् चिरादिह भविष्यति ॥

द्वितीयः कर्ण्णः–१४१ वेश्य(ऐश्व)र्येण परिभृष्टा समग्रश्चापि(`)सि च ॥
. . . . . . . . . . . च . . . . . ष . ॥

द्वितीय[1]ः कर्ण्णः–४११ अद्ध्वान(नं)गमनं चिन्ता दुक्खेन् च समागमः
सावशेषेण कार्येण . . . . न संशयः ॥

प्रथमा सजा–३२२ विजेष्यसि ऋपूं सर्व्वा प्रत्यर्थीवलवांश्च ते ।
लप्स्यसे प्रथमं स्थानं पश्चाच्छोकमवाप्स्यासि ॥

द्वितीया सजा–२३२ न च जानीषे कार्याणि पश्चात्तपेन युज्यसे ।
भविष्यति च ते[1]लाभसुमुखस्तव देवता–॥

[2]द्वितीयासजा–२२३ शरीरे तव सन्देह(हं)समतीतो दुरासदः ।
देवतानां प्रसादेन् प्रागुण्यं तव केवलम् ॥

प्रथमः काण–३३१ प्रागुणन्ते शरीरस्य लाभश्चार्थश्च प्राप्तये ।
उपस्थितं च ते कल्याणं मरुतस्य वचो यथा ॥

द्वितीयः काणः तन्त्र–३१३ आरोग्यं पु[3]लांभं च प्रेक्ष्यसे नात्र संशयः।
लप्स्यसे सर्व्वथा भद्रं भोगांश्च विपुलां तथा ।

---

१. "लाभः" ।

२. तृतीयः इति पठितव्यम् द्वितीयस्यतु पूर्वमेवागमात् ।

३. पुत्र लाभं, विपुलांभंवा ।

तृतीयःकणतन्त्रः-१३३मिथ्यावदासि यत्किञ्चिमित्त्रां द्विषासि नित्यदा।
देवतानां प्रसादाद्वा तिष्ठतवश्रेयो भविष्यति ॥
प्रथमश्चुञ्चुणः—३११ भोगानां विप्रयोगस्ते न चिरेणैव दृश्यते ।
अन्यं संप्राप्स्यसे स्थानं मा विषादं करिष्यासि ॥
द्वितीयश्चुञ्चुणः—१३१ अर्थसिद्धि द्वयचैव कुलस्थानं तथैव च ।
प्राप्स्यसे सर्व्वकामांश्च मरुतस्य वचो यथा ॥
तृतीयश्चुञ्चुणः—११३विप्रमुक्तस्त्वमर्थेभ्यो मित्त्रैश्च सुहृदेव च ।
उत्थानं चिन्तयानस्य उद्विग्न इव दृश्यते ॥
प्रथमा पाञ्ची—२२१ चलाच[लं इ]दं स्थानं दृश्यन्ते समाकुलं ।
न च नारम्भसे कार्यं दुक्खेन् च विमुच्यते ॥
द्वितीया पञ्ची—१२२ दिशः सर्व्वा समात्क्रान्ता[1] कालधर्म्म[2]कुरुष्वती।
सुखं तेन कार्यन्ते तेन तेषु कदाचनः ॥
तृतीया पञ्ची—२१२ पशुवन्धाश्च यज्ञां वै विविधान्यक्षसे तथा ।
[अर्घ्या]नि च समृद्धानि दास्यसे नात्र संशयः ।
तृतीयः पञ्ची—२१२ ॥
प्रथमाखरी—११२ अतिक्रान्ता परिक्लेशा दुखं चैव समानतः ।
शुभाशुभाद्विप्रमुक्तोसि लाभस्ते समुपस्थितम् ॥

## ❀[ इति चतुर्थप्रकरणम् ]❀



---

१. समाक्रांता, इति युक्तं ।
२. "धर्म्मे" ।

# [ पञ्चमं प्रकरणम् ]

[महादेवं] नमस्यामि लोकनाथं जनार्दनं ।
येन् सत्यमिदं दृष्टं यदिव्य . . . . . ॥ १ ॥
. . . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . प्राहुतत्सद्भिहृदश्या ॥ २ ॥
तालाभाला का(×) सुखं दुखं जीवितं मरणं तथा ।
इह सर्व्वं[1] मनुष्याणां मरुद्भि समुदीरितम् ॥ ३ ॥
रषभ(रिषिभि)नि[र्मिता . . ] मेरु वा संप्रयोजिता ।
इमा विद्याततः स्तेषां हृष्टावै मारुतादयः ॥ ४ ॥

तद्यथा–विमले २ निर्म्मलो देवि देवि व . . यत्सत्यं यत्सु . तं तत्सर्व्वदरिशय ।

अपेतु मानुषं चक्षु दिव्यं चक्षु प्रवर्त्ततु ।
अपेतु मानुषं श्रोत्रं दिव्यश्रोत्रं प्रवर्त्ततु ॥ १ ॥
अपेतु मानुषं गन्धं दिव्यं गन्ध(न्धं)प्रवर्त्ततु ।
अपेतु मानुषा जिह्वा दिव्या जिह्वा प्रवर्त्ततु ॥२॥-मालि मालि स्वाहा

४४१ द्वे [च]तुष्के पदश्चैव यस्यापतनितः व ।
बन्धुनाशश्च क्लेशश्च पीडा च महती तवं[2] ॥ १ ॥
विरोधश्च महातीव्रो नक्षत्रंवी[3](वि)द्यते नव ।
न ते पैतृकं स्वकर्म्म चै(चैव)तिष्ठति ॥ २ ॥

---

१. सर्व्वं ।
२. महतीस्तव ।
३. नक्षत्रं अत्र ।
४. अत्र चतुरक्षराणामभावः ।

यंचते मनाध्यार्त(र्तं)हृदयेनोपलक्षितम् ।
अन्यमर्थं विंचिन्ते तस्योत्पाचिर्नविद्यते ॥ ३ ॥

पञ्चमात्राणि वर्षाणि क्लिश्यासि न च विन्दसि ।
एतं च ते अभिज्ञानं पृष्टे तिलकस्तवः ॥ ४ ॥

११४–पदंस्तुप(प्र)थमं यत्र द्वे चष्कषु(चक्षुषु) संभवः ।
सन्तति सर्व्वकार्याणां धनं चाधिगमिष्यसि ॥ ५ ॥

कुलदेवो च ते भद्रा महादेवो मेहश्वरः ।
तस्यस्तवनं पूजां च जागरं चापि कारयं ॥ ६ ॥

तव . . महालाभो भविष्यति न संशयः ।
एतं च ते अभिज्ञान् सवृस्थे . कीतव ॥ ७ ॥

स्वप्ने च ते महा वा [द]ो ( . ो . . . . . . ।
४१४ चतुष्कपदमध्यं तु अवसान चतुष्कयः ॥ ८ ॥

य [ . . . . . . थ . . . . . . . . ] ।
यं च अर्थं विंचेहि सोपितेवृद्धिंकरशुभः ॥ ९ ॥

मातं पितरं मित्राः स्वजाश्चैव न मन्सस(सि)–।
न च पूजयसे वृद्धां देवतं(च)महेश्वरम्–॥ १० ॥

---

१. यंच ।
२. विचिंतेहि ।
३. पृष्टान्ते ।
४. चतुष्केस्तः सम्भवः ।
५. सन्तितं इति युक्तं ।
६. अभिज्ञानं ।
७. करः ।
८. मित्रां ।

तेन ते चिन्तितं द्रव्यं सर्व्व(र्व्वं)नैवोपवंद्यते-।
प्रसांन्नास्ते करिष्यति शान्तिं हृदय निर्वृत्ति * ॥ ११ ॥

३३४ व्यवहारकृता प्रीति मित्रबन्धुसमागमम् ।
सर्व्वंदुक्खविमोक्षश्च भूतिकामो लभिष्यसि-॥ १२ ॥
न सन्देह(हं)इतो षष्ठे तुवमासे महाधनः ।
यंत्वया मनसा ध्यातं तस्य लाभो न संशयः ॥ १३ ॥
अविघ्नेन तु तत्सर्व्वं सुखेनोपगमिष्यति ।
एतं च अभिज्ञानं सव्रस्ते शिरोर्गालम् ॥ १४ ॥

४३३ स [ . य . . . . . ] सर्व्वपापक्षयस्तव ।
भविष्यति चति चिन्ता मनदुष्टकरी ध्रुवा, ॥ १५ ॥
इदं च ते कृता चिन्ता पुरुषप्रति ।
सर्व्वेषामनेन् शीघ्रमेव भविष्यति ।
इतोव्वाशमेवर्षे धनं अधिगमिष्यसि-* ॥ १६ ॥

२४३ उंवटै प्रतिबन्धानि चोरै नैनृतिकै सह- ।
अशुभानि विचिन्ते हि तेन ते नास्ति संपदा ॥ १७ ॥
तस्य तेनास्ति लाभो अन्यमर्थं विचिन्ति(न्त)य ।
अद्यते सुबहु कालो क्लिश्यमानस्य न संशयः ॥ १८ ॥

---

१. उपविद्यते ।
२. प्रसन्नस्ते ।
३. शान्तिं ।
४. निर्वृत्तिं ।
५. यं त्वया ।
६. शिरोर्गलम् ।
७. कवतैः ।
८. क्लिश्यमानस्य ।

पश्चाभद्र[1] च ते क्षिप्रं सुखेनोपगमिष्यसि ॥ १९ ॥ क ॥*

३४४ धनधान्य(न्यै)श्च ते पूर्णा अस्ति सर्व्वस्य संपदा ।

यच(च्च)ते मनसा ध्यातं तत्त(त्ते) सर्व्व(र्व्वं)भविष्यति ॥ २० ॥

क्षीणानि तव दुक्खानि(दुःखानि) कल्याणं ते उपस्तितम्[2] ।

भविष्यति च ते प्रीति(:) विदेशगमने(तथा)स्तथा॥ २१ ॥

ततो अर्थमवाप्नोसि पुनरेवागमिष्यसि ।

४४३ शोभनन्ते इदं कार्यं पुत्रभ्राति(तृ)समागमः ॥ २२ ॥

भविष्यवि[3] न सन्देहो धनं चाधिगमिष्यसि ।

सर्व्वव्याधौ प्रशमनं प्रीतरामद्कारिका ॥ २३ ॥

अचिरेणैव कालेन सर्व्वं ते संभविष्यति ।

यच(च्च)ते मनसा ध्यातं तं(तत्)ते सर्व्व(र्व्वं)भविष्यति ॥ २४

तं(तत्)लभिष्यासि मा शोच सर्व्वं ते सफलं स्थितं ।

एतंच[4] ते अभिज्ञानं पृष्टांते तिलकस्तव: ॥ २५ ॥

भविष्यति[5] सर्व्वं यथा शास्त्रे निदर्शितं[6]–।

४३४ धनधान्यं च पुष्टिं च कल्याणं चाधिगमिष्यसि–॥२६

दातुं भोक्तुं च ते कालो भद्रन्ते समुपस्थितं ।

यच(च्च)ते मनसा किञ्चि(त्) अर्थहेतौ[7](:) समाहितं ॥ २७ ॥

त(त्) लभिष्यसि मा शोच द(द्द)श्यते सफलं तव ।

एतं च ते अभिज्ञानं मैथुनं सेवितं त्वया–॥ २८ ॥

---

१. पश्चात ।

२. उपस्थितम् ।

३. भविष्यति न सन्देहो ।

४. एतत् च ते ।

५. भविष्यति च ते सर्व्वम् ।

६. निदर्शितं ।

७. अर्थहेतोः ।

स साँपत्ना[1] च ते भग्ना लक्षिते समुस्थिता[2] ।
३४३ तृक चतुष्कश्च तृकश्चैवा ससाँनिकः[3] ॥ २६ ॥
अत्रयः क . . . . . . . . . . . . . . ।
अर्थनगमनं[4] लाभो वस्त्रलाभो धनागमं ॥ ३० ॥
रमिष्यसि सदा हृष्टो ज्ञातिसंघंपुरस्कृतः ।
एतं च ते अभिज्ञानं . . . . . से स्त्रिया ॥ ३१ ॥*
१४१ पद[5] चतुष्कश्च पदश्चैवावसानिकः ।
लाभो ते विपुलो दृष्टो लक्ष्मि(क्ष्मी)ते समुपस्थिता ॥ ३२ ॥
नित्यमाल्योपहारं[6][8] पूजया हि[7] जनार्दनं ।
मित्रं च सर्व्वभूतानां सदा संभावइ(यि)ष्यसि ॥ ३३ ॥
चिरंजीवो भविष्यसि धनवाश्च[9] नद्रिवदा ।
२२४ द्विकस्तु प्रथमं यत्र [चतुष्कश्च]वसानिकः ॥ ३४ ॥
पुत्रदारकलत्रेपुं[10] चिन्तां ते हृदि वर्त्तते ।
कार्यं परगतं चैव तस्य मंर्गसि[11] निर्वृति[12]–।: ३५ ॥

---

१. सा संपत्ना ।
२. समुपास्थिता ।
३. अवसानिकः ।
४. अर्थानुगमने ।
५. पदं ।
६. नित्यं माल्योपहरिण ।
७. पूजयहि ।
८. उपहारेषु ।
९. धनवांश्च ।
१०. कलत्रेषु ।
११. मार्ग्गासि ।
१२. निर्वृत्तिं ।

भविष्यवि(ति) पुं . . . . . ते किञ्चि(त्) पापकं ।
परितापश्च ते वृत्त अभ्याख्यं[1] न कृतो महा(न्)॥ ३६ ॥
[यत्ते विचि]न्तित[ं] कार्यं तत्त(त्ते) सर्व्वं(ं) भविष्यति ।
एतच(च्च)ते अभिज्ञानं गुदमूले तिलकास्तव–॥ ३७ ॥*
४२२ चतुष्कं प्रथमं [यत्र द्विकश्चैवावसा]निकं ।
चिरा(त्) प्रभृति[ते]क्लेशो दारिद्रेण[न] नन्दासि ॥ ३८ ॥
परद्रव्येषु हरणं नियतं[2] परिमृश्यसि ।
सत्यवा . . . . . . . . नित्यं गुणाधिकः ॥ ३६ ॥
ततो विपुलो अथ(र्थो) भविष्यति न संशयः ।
अद्यते तृणि[3] वर्षाणि क्लश्यतो[4] कारितं[5] च ते ॥ ४० ॥
सपत्नेन ते वासो ततो न सुखमेधसि ॥ ४० ॥ क ॥*
२४२ पुर्व्वो[6]द्विकश्चतुष्कश्च द्विकश्चैवावसानिका ॥ ४१ ॥
आगमिष्यति ते भद्रं ते रिपुणा शोक यशश(णा) (?) ।
. ि . . चिन्तितं कार्यं तं न क्षिप्रं भविष्यति ॥४२॥
. . . . . . . . . ष्म(ा)त(ा)क(ा)ति महाशुभां ।
एतं च ते अभिज्ञानं गुह्ये ते तिलक[ालकः] ॥४३॥
. . च्छ( . . . )सर्व्वमनसा यं विचिन्तितमिति ॥४३॥क॥*
४४२ द्वे चतुष्के द्विकश्चैव वृषोयं पतितो तव॥ ४४ ॥

---

१. अभ्याख्यान् ।
२. नियतं ।
३. त्रीणि ।
४. क्लिश्यतो ।
५. कारितं ।
६. पूर्व्वं ।

समित्र . . . . . . . . . . . . . . . |
[गु]रुकं भारिकं[1] चैव मनसा ते विचिन्तितं ॥ ४५ ॥
कृतं कारावितं चव तेन तेनास्ति निवृत्ति(:) ।
रिक्तके घटके स्नासि सु . . . . . . . ॥ ४६ ॥
. . . यं विहन्यासि सर्व्वमेत(तत्)निरा(र)र्थकं ।
अन्यमर्थं विचिन्ते हि नायंसौ भाग्यवर्धनं ॥ ४७ ॥*
४२४ चतुष्क[2][द्विकश्च यत्र चतुष्कश्च अवसानिका ।
अनित्य[3] चैवं गुह्यं हि अत्र बुद्धिं[4] न कारये(त्) ॥ ४८ ॥
साहसानि विचिन्तेसि मनसा ते परिधावति ।
ईश्वरं शरणं[5] गच्छ य . . . . . . . . ॥ ॥ ४६ ॥
. . . स्ति पुरुषे प्रीति(:) नैकाते रुचिता स्त्रिया[6] ।
दुशीलश्चापरार्थेषु स्वजन(:) स्वजने स(×)तथा ॥ ५० ॥
इदं तु गुरुकं कार्यं यन्ते(त्ते) मन[सि वृत्त्ये] ।
. . . . . . . तिषु वर्त्तते बन्धुकारण(म्) ॥ ५१ ॥
एतं च ते अभिज्ञानं स्वप्ने बध्यासि वध्वा वा ।
वदासि स्वरितशै(श्चै)व . । . . . . ला . . ॥ ५२ ॥
२४४ द्विकं पूर्व्व[7] चतुष्के वृषोयं पतितस्तव: ।
भद्रा च ते भद्रकृता नास्ति ते पापकारकम् ॥ ५३ ॥

---

१. भारिकं चैव ।
२. चतुष्कं ।
३. अनित्यं ।
४. बुद्धिं ।
५. शरणं ।
६. स्त्रियं ।
७. द्विक पूर्व्व ।

भविष्यति च ते सर्व्वं य[था शास्त्रे] प्रदरिशितम्[1] ।
एतं च ते अभिज्ञानं पार्श्वे तिलकालकः ॥ ५४ ॥*

११४ पदं पदं चतुष्कश्च यत्र . . . दृश्यते—।
कुलवृद्धिकरो नन्दे[2] भद्रन्ते समुमस्थितम् ॥ ५५ ॥

भूमिलाभोर्थलाभश्च संबन्धिकारणानि[च] ।
[यं] मन[सि विचिन्ततं सु]खेनोगामिष्याति ॥ ५६ ॥

सर्व्वन्ते अचिरेणैवेपवद्यते ।
एत(त्) च ते अभिज्ञनं वामोरु सव्रणस्तव ॥ ५७ ॥

दीक्षणे चोरुदेशे हि तिलविन्दुर्न संशयः ॥ ५७ ॥ क ॥*

४११—चतुक(ष्ट)श्च पदे द्वे तु यसा(श्चा) पतानिताध्रुवम् ॥ ५८ ॥

भद्राणि ते भविष्यति धनं वाधिगमिष्यसि ।
उपस्थितं ते कल्याणं धनवृद्धिश्च वै बुद्ध[म्] ॥ ५९ ॥

यं च प्रार्थयसे कार्यं त(तं) ते प्रं[3] भविष्यति ।
इतर्स[4][प्तम]के वरिषे(वर्षे) विनष्टा बन्धवास्तव ॥ ६० ॥

[एवं च ते अ]भिज्ञानं ग्रीवायां तिलकस्तवः ।
न शोचितव्यं कालस्ते नन्दितुं समुपस्थितम् ॥ ६१ ॥*

४१२—चतुष्कपदमध्यं[5] तु अवसाने द्वे तु पतिता नवः ।
अभियोमस्तया प्राप्त आमती सुमहन्तिकी ॥ ६२ ॥

---

१. प्रदर्शितम् ।

२. नन्दः ।

३. क्षिप्रं ।

४. इतः ।

५. चतुष्कं पद मध्यं ।

ततो मुक्तो मा शोच धनं ते समुपस्थितम् ।
इदं तं[1] तु गुरूकं(गुरुकं) कार्यं यत्ते मनसि वर्तते ॥ ६३ ॥
विनायक[2] परिक्लेशं वर्तती आमती च ते (?) ।
विपूतपापसिद्धार्थं सर्व्वं प्रतिलभिष्यसि ।
इतो सप्तमे दिवसे ि. . स्ते भविष्यति ॥ ६४ ॥

## [ इति पञ्चमं प्रकरणम् ]*

---

१. "त" इति व्यर्थं प्रतीयते ।

२. विनायकं

Vināyaka is a name of Gaṇeśa, who is the God of wisdom and the remover of obstacles.

*This portion of the manuscript is written with extreme slovenliness, both with regard to penmanship and accuracy. Hence the reading in many places is a matter of considerable difficulty, and in such cases what is offered must be taken as more or less conjectural. Most of the inaccuracies are corrected in brackets and footnotes of the text. The work is a treatise on divination by means of dice, but it is a mere fragment, only a little more than one fourth of the whole being extant. Unfortunatly the conclusion, which would have given the name of the work and of its author, is missing.

# [ षष्टं प्रकरणम् ]

एव(वं) मया श्रुतमेकस्मि(न्) समये भगवाञ्छ्रावस्त्या विहरति जेतवने अनाथपिण्डदस्यारामे [तेन कालेन] स्वातिर्नाम भिक्षुः प्रतिवसति स्मु(स्म) नवोदहरस्तरुणः अचिरप्रव्रजितः अजिरागतः[1] इमं धर्म्मविनयं संघस्यार्थे जेन्ता कदारुणि[2]पाटयमानोन्यन्तरात्पूतिदारु सुति निष्क्रम्प(म्य) महता कृष्णसर्पेण दक्षिणे पादांगुष्ठे दष्टः स क्रान्तकायः भूमौ पतितः फेणं स्रावंत्यक्षीणि च परिवर्त्तयमानः आद्राक्षीदायुष्मानानन्दस्वातिर्भिक्षुमनाधिकं बाढा ग[ल]ानं फेनं वाहयमन्तं अक्षीणि च परिवर्तयमाणां स्वपंतं[3] दृष्ट्वा च पुनस्त्वरि(तं) सी . . . .

तस्याहं भगवं कथं प्रतिपद्यामि—

एवमुक्ते भगवानायुष्मन्तमानन्दमेतदुवाच—

गच्छत्य(त्वं)मानन्द(न्दं) तथाग(तस्यैव) वचनेन—

अनया *महामायूर्या विद्याराजाया[4] स्वातिभिक्षोः रक्षांकरोहिगुप्तं[5] परि(वि)त्रं परिग्रहं परिपालनं शान्ति स्वस्त्ययनं दण्डपरि(ह)ारम् विष

१. अचिरागतः ।

२. दारुणी ।

३. स्वपनं ।

४. राजया ।

५. रक्षां ।

*Mahā-Māyarī or "the great Māyūrī" is the name of the spell. It is probably called so, because the peafowl (māyūra) is the great traditional enemy of the snake.

दुदूषणं विषनाशनं सीमाबन्धं धरणीबन्धं च करोहि—

देवग्रहातो—नागग्रहातो—असुरग्र(हातो)—मरुतग्रहातो, गरुड-ग्रहातोगन्धर्व ग्रहातो—किन्नरग्रहातो—महोरगग्रहातो—यक्षग्रहातो—राक्षसग्रहातो—प्रेतग्रहातो—पिशाचग्रहातो—भूतग्रहातो—कुंभांड-ग्रहातो—पूतनग्रहातो—कटपूतनग्रहातो—स्कन्दग्रहातो—उन्माद—ग्रहातो—च्छायाग्रहातो—अपस्मारग्रहातो—ओस्तारकग्रहातो ॥

कृत्यकर्म्मणकग्खोर्दो किरण—वेताडचिच्चप्रेषकदुर्भुक्तदुच्छ-र्दत्—दुच्छाय—ओग्र . . . . . . . . . वधूतातो ज्वरादेकाहिक-द्वेतीयक—त्रैतीयकाच्चातुर्थका सप्ताहिकादर्धमासिका मासिका-दैवसकृन्म ःःनित्यज्वराद्विषमज्वराद्भ(भू)त ज्वरान्मानुष ज्वरा—वातिक पैत्तिक श्लेष्मिक् सन्निपातकात्सर्व्वज्वरा शिरिषोर्त्ति परिमपनय अर्धावभेदकं—अरोचकं—माक्षिरोगं नासारोगं मुखरोगं कंठरोगं हृदयरोगं ।

कर्ण्णशूलं—दंतशूलं—हृदयशूलं—पार्श्वशूलं—पृष्टशूलं—उदरशूलं गण्डशूलं—वस्तिशूलं—उरुशूलं—जंघाशूलं—हस्तशूलं—पादशूलं-अंग प्रत्यंगशूलं चापनय—रात्रौ स्वस्तिदिवा स्वस्ति स्वस्तिमद्ध्यादिने स्थिते—स्वस्ति सर्व्वबुद्धा कुर्व्वंतु मम ॥

इडि—विडि—हिविडि—निडे—अडे—याडे—हगडे—हरिवेगुडि—पांसुपिशाचिनि—आरोहानि—आरोहाणे—एले—मेले—तिले—किले—तिले—मेले—मिले—तिमि—दुमिपे—इट्टि—मिट्टि—विष्टब्ध—विमले—हुहु—हुहु—अश्वमुखि—काट्टि—महाकाडि—प्रकीर्ण्ण केशी-कुलु-कुलु—वस्फलु—कोलु—कोलु—धोसादुम्बा—दोदुम्बा—दुम—दुम्ब-गोलाय—शेलाय—हिशु-हिलि—हि—मिलि—मिलि—तिलि—तिलि—चुलु-चुलु-मुलु—मुलु—मुलु—मुलु—मुलु—हुहु—हुहु—हह(॰॰)—ह(॰) [हु]—हुहु

बबा–बबा–बबा–बबा–बबा–जल–जल–जल–जल–जल–
दम[दमनी] [तापिनी–पाचनी–ज्वलनी] दन्दुभी–गर्जनी–
वर्षणी–स्फोटनी–पतनी–पाचनी–हारिणी–कंपन(ी)-मदन(नी])-
म[ण्डनी]–[दुम्बनी, सुकसा]क्क मे–गोलायाः परिवेलाय वर्षतु
देवो समंतेन–इलिकिसि स्वहा (स्वाहा) ॥

मैत्री मे ध्रितराष्ट्रेषु मैत्रीनैरावणेषु च ।
विरुपाक्षेषु मे मैत्री कृष्ण गौतमकेषु च ६ ॥] ॥ १ ॥
मणिना नागराज्ञामे मैत्री वासुकीनामपि ।
दण्डपादेषु [ना]गेषु पूर्ण्णभद्रेषु च सदा ॥ २ ॥
नन्दोपन्दो ये नागा वर्ण्णवन्तो यशस्विनः ।
देवासुरंपि संग्रामं मनुभवंति महार्धिका ॥ ३ ॥
अनवतप्तेन् वरुणेन् मैत्री संहारकेन् च ।
तक्षकेन् अनंतेन् तथावासुमुखेन च ॥ ४ ॥
अपराजितेन मे मैत्री मैत्री च्छिवसुतेन् च ।
महामनस्विना नित्यं तथैव च मनस्विना ॥ ५ ॥
कालको अपलालश्च भोगवान्श्रामणेरकः ।
दाधिमुखो मणिश्चैव पुण्डरीको दिशां पतिः ॥ ६ ॥
कर्कोटक शंखपादः कंबलाश्वतरावुभौ ।
एतेष्वपि च मे मैत्री नागराजेषु नित्यशः ॥ ७ ॥
साकेतकश्च कुंभीर सूची लोमस्तथैव च ।
उगातिमेन कालेन मैत्री मे रिषिकेषु च ॥ ८ ॥
तथा पूरणकर्ण्णकमैत्री शकटमुखेन् च ।
कोलकेन सुनन्देन वत्सी पुत्रेण च सदा ॥ ९ ॥

१. यासुकिना ।
२. संग्राममानुभवंति ।

एल(ा)पत्रेण् मे मैत्री मैत्री लंबुरेण् च।
पिथिलश्च महानागो मुचिलिन्दश्च विश्रुतः ॥ १० ॥
प्रिथीवीचराश्च ये नागा तथैव जल निश्रृतः ।
अतंरीक्षचरा ये च मेरु ( . . ) समाश्रिताः ॥ ११ ॥
एकशीर्षं द्वी शीर्षे हि मैत्री ते हि मे नित्यशः ।
अपादेषु मे मैत्री मैत्री [मे]द्वि [पदेषु च] ॥ १२ ॥
[चतुश्]पदेषु मे मैत्री मैत्री बहु पदेषु च ।
मामे अपादकोहि(हिं)सि मा मे[हिंसि] [द्विपादकः] ॥१३॥
[मा मे हिंसि चतुष्पादो मा च मे बहु पादकः ।
सर्व्वनागेषु मे मैत्री ये नागा जलनिश्रताः ॥ १४ ॥
सर्व्वभूतेषु मे मैत्री ये स [ . . ] [पृथ्विचरः] ।
सर्व्वसत्वेषु मे मैत्री ये सत्वा त्रासस्था वराः ॥१५ ॥
जंगमा सर्व्वे सत्वा सुखो भोन्तु सर्वे भोन्तु अनामया-
सर्व्वं भद्राणि पश्यन्तु माकश्च पापमाचरे ॥ १६ ॥
मैत्रचित्तं समादाय करोमि विषदूषणं ।
रक्षां परिग्रहं चैव तथैव परिपालनं ॥ १७ ॥

नमो बुद्धायः नमोस्तु बोधये नमो विमुक्ताय--नमो विमुक्तये--नमोस्तु शान्ताय--नमोस्तु शान्तये--नमोस्तु मुक्तायः,नमोक्तये--ये ब्रह्मा(X)णा वाहितपापाधर्माः तेषां नमस्ते च यशमित्रस्य परपालयन्तु स्वाहा—सर्व्वभयेभ्यः सर्व्वोपद्रवेभ्यः सर्व्वोपसर्गोपायाभ्यः सर्व्वज्वरेभ्यः सर्व्वव्याधिभ्यः सर्व्वग्रहेभ्यः सर्व्वविषेभ्यः रक्षंतुः॥

## [ इति षष्टं प्रकरणम् ]

---

१. लुंबरकेण च ।
२. उपायासेभ्यः ।

# [ सप्तमं प्रकरणम् ]

[अस्य . . अनन्दः महामा] घुट्टारा जयो एतर्हि हृदय [म] [अनुवीक्ष्यस्यामि तद्यथा] इति, मिति, तिलि, मिलि, मिति, मिति ( . ) दुंब, तुंब, सुवचिरि कसिया, भिन्नमेडे, नमोबुद्धानां चिकीर्षाप्राप्तमूले, इतिहाराः लोहितमूले [दुं]ब, अंब, कुट्टि, कुनट्टि तट्टि, कुन्ननट्टि, विलकुंजनट्टि, अट्टकवन्तायां वर्षतु देवोनवमा सादश मासेति, इलिमिलि, किलिमिलि, केतुमूले, दुदुम,सुदुमेडे, दलिमे, संतुवट्टे, बुसट्टे, वुसट्टे, षुसर, एनवस्तरुके, नक्कलि, नर्म्मलिमे, न रखर, मखिले, इतिसञ्जले, तुंब, तुंबं, अनडे, प्रमाडे, अणणडे वसतुदेवो नवोदकेन्, सत्तखुत्तो समंतेण, नारायणे, पाराय[णे], [हरिताले कुनताले, इ]लिमे, सिद्धंतु मंत्रपदा स्वाहा ॥

इदं तदा तनमामाय . . ी . . . . . . . . . . . . .

[वाचकमूले, दुम्ब तुंब इति सावरे प्रियंकरे आवत्तो परिवत्ते वर्षतु देवो नवोदकेन् समांतेन नमो भगवत्तो इतिचियः] इन्द्रागोपे सिकस, आशने, पाशने, पारनिकाले, कपिलमित्ते, नमो भगवतो बुद्धाय, [सिद्धचंतु मंत्रपदा स्वाहा] ॥

अनया आनन्द महामायूर्या विद्याराजया तथागतभाषिताया यशमित्रस्य राक्षां करोमि [गुप्तिं परित्रं परिग्रहं परिपालनं शांति स्वस्त्यानां दण्डपरिहारं ज्वारितेन विषदूषणं विषनाशनं च करोमि।। जीवतु वर्षशतं पश्यतु शरदा शतं, न च आहंतं [आन]न्द समानुपश्यामि स देवके लोके स मारके स ब्रह्मकें सश्रमण ब्रह्मणिका [यां प्रजायां सदेवमानुषा सुरायां यस्यानाया महाभायूर्या विद्या

[1]राजाया रक्षायां [2]कृतयां गुपात [परित्रेण परिग्रहेण परिपालनेन् शांति] (स्व)स्त्ययनेन् दण्ड परिहारेण विषदूषणे[न्][विषनाशनेसा यः कश्चिदेव विहेथा उपसंक्रमेत्] ॥

[इयं चानन्द महामायूरी विद्या रजनी ग्रामगतेन् मनसि कर्त्तव्यः, अरण्यगतेन् मनासि कर्त्तव्यः, पथिगतेन्, उत्पत्थाग] तेन, राजकु[3]ल मध्यगतो, चोरमध्यगतेनाग्नि मध्यगत, उदक मध्य गतेन, [प्रत्यार्थिकमध्यगतेन्, परिशद] मध्यगते विवाद-मध्यगतेन्, अहिदष्टकेन्, विषपीतकेन्, सर्व्वेभ्य सन्निपाते च, मनसिकर्त्तव्य।[वातिक्-पैतिक्-श्लेष्मि]क् सन्निपाति[केषु] चतुरुत्त-रेषु च चतुरुषु व्याधिशतेष्वन्यतरान्यतरेण् व्याधिना स्पृष्टः समानापत्सु वा समुत्पन्नासु तत्कस्माद्धेतो, वतार्होह्यानन्द दण्डेन-मुच्चिष्यते, दण्डार्हः प्रहारेण, प्रहारार्हः अक्रोसेन, अक्रोसाराह परिभाषया, परिभाषणार्हः रो[4]मार्हेण एवमेवमुच्चिष्यति, सर्व्वव्याधि विनिवृत्तिश्चास्य भवि[ष्यति][इमे च आनन्द मन्त्रप-पदा मनसि कर्त्तव्यः तद्यथा । इल्लि मिलि किलि मिलि केतुभूले, बुद्धवाचे वुसारीपी २ केवची ॥

## [ इति सप्तमं प्रकरणम् ]*

---

१. राजया इति युक्तं ।
२. कृतायां पठितव्यम् ।
३. राजकुलमध्यगतेन वा गते इति युक्तं पाठम् ।
४. रोमहर्षेण इतियुक्तं प्रतीति ।

*Here, and elsewhere, the missing portions of the text are supplied from the Mahāmāyūrī Sūtra.

APPENDIX TO PART II.

# ( अश्विनी संहिता )

## हरीतकीकल्पः ।

(A) Shorter Recension, in 27 verses.

धरण्यां निपतद्-बिंदुः शक्रस्य पिबतोऽमृतात् ।
पवमानस्य योगेन विकीर्णः सप्तधाभवत् ॥ १ ॥
यत्र यत्रोपदंशास्तु देशेष्वमृतबिन्दवः ।
तत्र तत्र समुत्पन्ना सप्तभेदा हरीतकी ॥ २ ॥
विजया रोहिणी चैव पृथुनामा तथामृता ।
जीवन्ती त्रिवृता तद्वद् अभयाचेति सप्तधा ॥ ३ ॥
अलाबुग्रीवा विजया चतुरंगी तु रोहिणी ।
शुष्कत्वक् पृथुनामा च मांसला चामृता तथा ॥ ४ ॥
सुवर्णवर्णा जीवन्ती पंचांगी त्रिवृता स्मृता ।
अभया कृष्णवर्णा स्याद् इत्येताः संम्प्रकीर्त्तिताः ॥ ५ ॥
विजया वातरोगेषु रोहिणी सांनिपातिके ।
पैत्तिके पृथुनामा च श्लैष्मिके चामृता तथा ॥ ६ ॥
अर्शोविकारे जीवन्ती त्रिवृता व्रणरोपिणी ।
अभया सर्व्वरोगेषु प्रयोज्यः स्युर्यथायथम् ॥ ७ ॥
विजया विन्ध्यदेशेषु कन्याकुब्जेषु रोहिणी ।
सौराष्ट्रे पृथुनामा च गंगायास्त्वमृता तटे ॥ ८ ॥
काश्मीरदेशे जीवन्ती त्रिवृता हिमवद्गिरौ ।
अभया वैन्यदेशेषु जाता चैव हरीतकी ॥ ९ ॥

त्वगाश्रितं तु कटुकाम्लं स्नाय्वाश्रितं विदुः ।
मांसाश्रितं कषायं तु तिक्तं वृन्ताश्रितं तथा ॥ १० ॥
मज्जाश्रृतं तु मधुरमेवं पञ्चरसाः स्थिताः ।
हरणात् सर्व्वरोगाणां यशोयुक्ता हरीतकी ॥ ११ ॥
पथ्यत्वात् सर्व्वभूतानां पथ्या शिवतया शिवा ।
यस्माद्विजयते व्याधीन् समग्रान् विजया तथा ॥ १२ ॥
अभयां सर्व्वभूतेभ्यो भवत्यायुश्च शाश्वतम् ।
यशःशीलतया तेषाम् तेनैवमभया स्मृता ॥ १३ ॥
तीरजा वनजा चेति पार्वतीया इति त्रिधा ।
यथोत्तरं पथ्यतमा विज्ञेयास्त्रिविधास्तु ताः ॥ १४ ॥
द्विकर्षमात्रं कर्षश्च तदर्धं च भवेद्यदि ।
उत्तमं मध्यमं नीचं हरीतक्याः फलं स्मृतम् ॥ १५ ॥
जन्तुदष्टं जले विद्धां लीनां पङ्कथवा जले ।
अन्तर्मज्जाविनिर्मुक्तां पुराणां रसवर्जिताम् ॥ १६ ॥
ऊषरे च स्थितां भिन्नां वर्जयेत् तां हरीतकीम् ॥१७॥क॥
कुपितं पवनं गुड़ तैलयुता
घृतशर्करया सह पित्तमपि ।
मधुपिप्पलिभिः कुपितां तु कफम्
शमयेच्छमपेच्छमयेच्चाभया ॥ १८ ॥
उन्मीलनी बुद्धिबलेन्द्रियाणां
सम्मीलनी पित्तकफानिलानाम् ।
संशोधनी मूत्रशकृन्मलानां
हरीतकी पथ्यतमा नराणाम् ॥ १९ ॥
जीर्णे पथ्याऽजीर्णे पथ्याजीर्णाजीर्णे पथ्या पथ्या ।
भुक्ते पथ्याभुक्ते पथ्याभुक्ताभुक्ते पथ्या पथ्या ॥ २० ॥

ग्रीष्मे साम्यगुणां समानलवणां मेघावनद्धाम्बरे ।
सार्धं शर्करया शरदि वाम्लया शुंठ्या तुषारागमे ॥ २१ ॥
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिताम् ।
राजन् प्राप्य हरीतकीमिव गदाः नश्यन्तु ते शत्रवः ॥२२॥
श्रीमन्नायुष्मतां वितरं कमलाशन प्रियं च हरी ।
भवभयविनाशम् शस्तवा दद्याद् रोगविजयं च (?) ॥ २३ ॥
गुरूणां सप्तकं दद्याद् अभिषक्ते तु पंचकम् ।
शतकं बद्धे त्रयं रजनाः पथ्यंद् दद्याद् भिषक्तमः ॥२४॥
त्रयं त्रिदोषशमनं पञ्चकं चेन्द्रियप्रदम् ।
सप्तकं सप्तधात्वर्थमिति व्यक्ता हरीतकी ॥ २५ ॥
हरिं हरीतकीं चैव गायत्रीं च दिने दिने ।
मोक्षारोग्यतपःकामी चिन्तयेद् भक्षयेज्जपेत् ॥ २६ ॥
हरीतकी मनुष्याणां मातेव हितकारिणी ।
कदाचित् कुप्यते माता नोदरस्था हरीतकी ॥ २७ ॥



APPENDIX TO PART II.

# (अश्विनी संहिता)

## हरीतकीकल्पः ।

B. Longer Recension, in 37 verses.

सुखोपविष्टं ब्रह्माणमश्विनौ वाक्यमूचतुः ।
कुतो हरीतकी जाता कतियोनिश्च कीर्तिता ॥ १ ॥
रसाः कति समाख्याताः कति चोपरसाः स्मृताः ।
कति नामानि चोक्तानि किं च तासाञ्च लक्षणम् ॥ २ ॥
का कथं च प्रयोक्तव्या के च वर्णा गुणाश्च के ।
केन द्रव्येण संयुक्ता रोगान् कान् कान् नियच्छति ॥३॥
स तत् पृष्टं यथा पृष्टं भगवान् वक्तुमर्हसि ।
अश्विनोर्वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ४ ॥
पपात् विन्दुर्मेदिन्यां शक्रस्य पिवतोमृतम् ।
ततो दिव्या समुत्पन्ना सप्तयोनिर्हरीतकी ॥ ५ ॥
विजया रोहिणी चैव पूतना चामृता तथा ।
चेतकी त्वभया चैव जीवन्ती चैव जातयः ॥६॥
अलाबुवृत्ता विजया चावयक्ता चैव रोहिणी ।
पूतनास्थिमयी सूक्ष्मा स्थूलमांसा तथामृता ॥ ७ ॥
अस्थ्नातु, चेतकी ज्ञेया पञ्चास्रा चाभया मता ।
सुवर्णवर्णा जीवन्ती सप्तानामपि लक्षणम् ॥ ८ ॥
सर्वप्रयोगे विजया रोहिणी व्रपरोपिणी ।
लेपार्थं पूतना विद्यादेकार्थं चामृतां विदुः ॥ ९ ॥
चेतकी सर्वरोगेषु नेत्ररोगेभया तथा ।
जीवन्ती चूर्णयोगेषु यथार्हमुपकल्पयेत् ॥ १० ॥

परीक्षयेत ततो धीमान वर्णस्वगुणनामभिः ।
क्षिप्ताम्भसि निमज्जेद्या गुणकृतसा प्रशस्यते ॥ ११ ॥

चेतकी द्विविधा सा तु कृष्णा शुक्ला तु वर्णतः ।
षडांगुलायता कृष्णा शुक्ला चैकांगुलोन्मिता ॥ १२ ॥

काचिदाखा(स्वा)द् मात्रे तु काचिद् गन्धेन भेदयेत् ।
काचित् स्पर्शेन दृष्टान्या सैव चोक्ता चतुर्विधा ॥ १३ ॥

चेतकीं पादपच्छायामुपसर्प्पन्ति ये नराः ।
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगास्तथा ॥ १४ ॥

चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्वेगेन भिद्यते प्रभावान्नात्र संशयः ॥ १५ ॥

नृपादि(णां)सुकुमाराणां कृशानाम्भेषजद्विषाम् ।
चेतकी परमा शस्ता हिता सुखविरेचनी ॥ १६ ॥

सप्तानामपि जातीनाम्प्रधाना विजया स्मृता ।
सुखप्रयोगा सुलभा सर्वरोगेषु शस्यते (शस्यते सर्वकर्मसु) ॥ १७

हरीतक्या रसान्पञ्च विद्याल्लवणवर्जितान् ।
मज्जाश्रितं तु मधुरमाम्लं स्नायवाश्रितम् विदुः ॥ १८

त्वगाश्रितं तु कटुकं तिक्तं वृन्ताश्रितं ततः ।
अस्थ्याश्रितं कषायं तु रसमाहुर्मनीषिणः ॥ १९ ॥

कफं कटुकप्रायत्वादाम्लत्वान्मारुतं जयेत् ।
पित्तघ्नी स्वादुतिक्तत्वादल्पाग्निमेव पाचनी ॥ २० ॥

वातिकान् पैत्तिकान् यस्मात् श्लेष्मिकान् सन्निपातिकान् ।
प्रसह्य हरति व्याधीन् तस्मात् प्रोक्ता हरीतकी ॥ २१ ॥

सदा हिता मनुष्यस्य मातेव हितकारिणी ।
मातापि विक्रयां सौ(याति)ति नोदरस्था हरीतकी ॥ २२ ॥

हरीतकी दरिद्राणां सुखोपायं रसायनम् ।
पथ्यत्वे प्रवरा प्रोक्ता सर्व्वामयविनाशनी ॥ २३ ॥

तृष्णायां कण्ठशोषे च हनुस्तम्भे गलग्रहे ।
नवज्वरे तथा क्षीणे गर्भिण्यां च न शस्यते ॥ २४ ॥

हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवेन हितावापि सान्तत्येनाग्निदीपनी ॥ २५ ॥

हरीतकी समगुडविश्वभेषजसंयुता ।
निहंत्यामाश्ये रोगान वज्रेण एन्द्रो यथासुरान ॥ २६ ॥

हरीतकीं सदा खादेत् शरत्काले सशर्कराम् ।
हेम्नि सश्रृंगवेरश्च शिशिरे पिप्पलीयुताम् ॥ २७ ॥

वसन्ते मधुना मिश्रां ग्रीष्मे च सगुडां तथा ।
वर्षासु सैन्धवोपेतां पिष्टं कल्कमथापि वा ॥ २८ ॥

उन्मीलिनी बुद्धिबलेन्द्रियाणां
निमीलिनी पित्तकफानिलानाम् ।
विस्रंसिनी मूत्रशकृन्मलानां
हरीतकी स्यात् सह भोजनेन ॥ २९ ॥

हरीतकी सर्पिविपाचयित्री
समश्नतस्तत् पिबतोनुसर्पिः ।
वातात्मकाश्चास्य न सन्ति रोगाः
स्यात् पृष्ठजंघोरुकटिबलश्च ॥ ३० ॥

एरण्डतैलेन विपाच्य पथ्या
स्यादेतदेवानुपिबेच्च ।
सशूलविष्टम्भ कृतान् विकारान्
सर्व्वाञ्जयेत् पित्तकफानिलोत्थान् ॥ ३१ ॥
मूत्रे स्थितः सप्तदिनं महिष्याः
पञ्चाभया मूत्रपलानि पञ्च ।
क्षीरेण यः सप्त दिनानि खादेत्
क्षीरोदनाशी परतस्तथान्यान् ॥ ३२ ॥
एष त्रिसप्तादपरः प्रयोगो
वातोदरं तीव्रमपीह हन्यात् ।
प्लीहानमानाहमुरोग्रहश्च
सपाण्डुरोगञ्च गरं क्रिमींश्च ॥ ३३ ॥
हरीतकी धान्यतुषोदसिद्धा
सपिप्पली सैन्धवहिंगुचूर्णा ।
सोद्गारधूमं भृशमप्यजीर्णम्
निहन्ति सद्यो जनयेत् क्षुधां च ॥ ३४ ॥
हरीतकीं वा मधुनावलिह्यात्
आमातिसारे प्रथमं प्रवृत्ते ।
प्रवाहयेत् सत्वावशिष्टदोशान्
संशोधयेत् कोष्ठमशेषतश्च ॥ ३५ ॥
द्वे पूर्वमद्यादशनादितो द्वे
द्वे चापि भुक्त्वा तु यथा स्वयं च ।
अस्य प्रयोगादभयाष्टकस्य
त्रिसप्तरात्रेण पुनर्युवा स्यात् ॥ ३६ ॥

मेधा स्मृतिः शक्तिरतीव कान्तिः
श्रीमद्वपुर्नित्यमनामयत्वम् ।
दीप्ताग्निता दृष्टिबलं च कुर्य्यात्
सर्व्वे च रोगाः प्रशमं प्रयांति ॥ ३७ ॥

*[इति अश्विनी संहितायां हरीतकीकल्पः]

---

*The Harītakī Kalpa of the Aśvina-Saṁhitā in two recensions was edited from the two Manuscripts found in the possession of Dr. P. Cordier, by the former editor. They differ widely in length and matter, not only from each other, but also from the version contained in our manuscript. Our chapter probably presents the genuine version of the true ancient Aśvina Tantra and for that reason is of particular interest.